डा.चन्द्रशेखरकम्बार विरचिता

# महामायिनी

(ज्ञानपीठ-पुरस्कारेण पुरस्कृतं कन्नडनाटकम्)

033,2KAM,1
15Q8

अनुवादकः डा. वेणीमाधवशास्त्री जोशी

विद्यावाचस्पतिः, M.A., Ph.D., Ph.D. (Poona)

## Dr. VENEEMADHAVA-SHASTRI B. JOSHI

Dr. Joshi taught Sanskrit and Prakrit at the Karnatak College, Dharwad for 30 years. He has been enriching the field of literature by his good many research articles (more than 170) and 52 books in Sanskrit, English and Kannada. He has attended more than 70 National Seminars, Conferences and Pandit--Parshads. He has secured 3 Prizes viz. Munipunyavijayaji Prize, Dr. D.K. Jain research institute prze, and Dr. V. Raghavan Prize in the All India Oriental Conferences for his three research articles on Prakrit and Sanskrit subjects.--Honoured by the Vedavyaasa Puraskaara of the Brahmachaaryaashram of Shekhavati at Bhivani (Hariyana) for III Rank in the National Sanskrit essay competition (2000). -- Secured good many ranks and prizes in the Story Competitions in Sanskrit at Delhi and Uttaranchal Sanskrit Academy.-- The Purushottama Puraskaara, Sangli (2008)--Vedaanta Aachaarya by Shri Shankaraananda Matha Audumbara-KaavyaRatna by Kaashi Saanga Veda Vidyaalaya.--Shri Aadi Shankar Puraskaara (Rs. 1 Lakh) by Shankara Matha of Matungaa Mumbai-Shaastra Vidyaanidhi Award of Rs. 30.000/-- by Veda Shaastra Poshini Sabha Mysore--`Vidvadbhooshana' by Akhila Bhaaratiya Vidvat Parishat Kashi.

Undergoing the training in the staunch methods of Sanskrit learning
...ashastri at Shri Shankaaracharya
... the Phatake Gold Medal in Vedanta.-
...krit examinations viz. Kovida(=B.A.)
...e completed his M.A. in 1972.--First
...ion to Advaita" from KUD and the
...ada-A Study" from Poona University
...ates he has served the P.G. Dept. of
...rsity as a Guest Lecturer. Under the
...me (5 years) KU, Dharwad he has
... teaching Prakrit in the Dept. of
...s translation work in Sanskrit viz.
... the Saahitya Academy New Delhi.--
...ays, poems, Anyoktis (200 verses) &
... his credit and has given many a
...lamber of the committee preparing
... for schools (Dalai Lama Trust New
...Sanskrit is highly commendable.

O33,2KAM,L 5788
15Q8
Kambar, Chandra-
shekar.
...hamayeence.

# महामायिनी

(ज्ञानपीठ-पुरस्कारेण पुरस्कृतं नाटकम्)

अनुवादकः

**डा. वेणीमाधवशास्त्री जोशी**

काव्यचूडामणिः M.A., Ph.D., Ph.D. (Poona)

(काव्यरत्नं, शास्त्रविद्यानिधिः, विद्वद्भूषणं, विद्यावाचस्पतिः,

वेदान्ताचार्यः, आद्यशङ्करपुरस्कार पुरस्कृतः (1 Lakh))

*Rtd. Professor of Sanskrit & Praakrit*

*Karnatak College,*

*Dharwad-580001*

2018

रूपाप्रकाशनम्

महामायिनी(ज्ञानपीठ पुरस्कारेण पुरस्कृतं नाटकम्) - **MAHAAMAAYINEE** - Dr. **Chandrashekhar Kambar** (Jnaanapeetha Awardee book) *Translation in Sanskrit by* **Dr. VeneemadhavaShastri B. Joshi** *M.A., Ph.D., Ph.D. (Poona) Rtd. Professor of Sanskrit & Praakrit, Karnatak College, Dharwad - 580001, Mobile : 9449357212.*

033,2KAM,1
15Q8J

**Roopa Publications** (Ph : 0836-770741)
*"Mahaalasaakaanta"*, Plot No. 33,
*Kittura Rani Channamma Nagar, Dharwad - 580 001*
Karnataka - INDIA

| | | |
|---|---|---|
| *Pages* | : | xviii + *101* |
| *Copies* | : | *300* |
| *ISBN* | : | *978-93-83314-16-04* |
| **First Edition** | : | **2018** |
| *Price* | : | ₹ 100 |
| © | : | *Author* |
| *Type setting* | : | *Sri. Javeed Tadakod*<br>*Dharwad - 8, Ph : 97382 54766* |
| *Front Page* | : | *Mihir Graphics,*<br>*Dharwad* |
| *Printer* | : | *Saraswati Offset Printers*<br>*Dharwad, Ph : 0836-2444057* |

SRI JAGADGURU ... DHYA
JNANA SIMHASAN ... MANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ...5788...

॥ श्रीः॥

ज्ञानपीठपुरस्करासमलंकृताः
**डा. चन्द्रशेखर कम्बार महोदयाः**
अध्यक्षाः, सहित्य अकादमी, नई दिल्ली एतेषां

# पूर्वोक्तिः

ख्यातपण्डिताः काव्यचूडामणिः सन्मान्याः डा. वेणीमाधव शस्त्रिमहोदयाः मम "महामायी" नाटकस्य संस्कृते अनुवादं कृत्वा मदीयसाहित्य-रचनायाः गौरवं द्विगुणितं कृतवन्तः । तेभ्यः हृदयान्तरालात् वन्दनानि समर्पयामि । वर्षीयांसो महीयांसस्ते तस्य नाटकस्य कृते प्रास्ताविकं किञ्चित् लेखितुम् अभिहितवन्तः । दशमिनां वचनानि नातिक्रमणीयानीति कृत्वा संकोचभावेनैव द्वित्राणि वचांसि लिखितवानहम् ।

शिष्टानां साहित्ये मृत्युदेवस्य यमस्य विषये सावित्री, मार्कण्डेयः इत्यादीनां कथानकाः सन्ति । अस्माकं जानपदक्षेत्रेऽपि, कथाः प्रतीति समयाः आचारविचाराः यथेच्छमेव सन्ति । मदीयं तावदिदं नाटकं जानपद-विश्वासप्रतीति-समयक्षेत्रे अन्तर्गतां अन्यतमां कथामाश्रितं विद्यते । जानपदक्षेत्रे मृत्योः देवता 'शटवीमाता' । सर्वेषां भाललेखनं सा एव कुरुते । नवजातशिशोः त्रयोदशीयदिने सा भाललेखनार्थमागमिष्यतीति प्रतीतिः । तदा तस्यै प्रकाशस्तावदपेक्ष्यत इति तस्मिन् दिने गृहजनाः शिशोः समीपे दीपं स्थापयन्ति ।

निधनदेवतायाः इमां परिकल्पनामाश्रित्य प्रवृद्धाः कथा अपि सन्ति । मानवस्य स्वातन्त्र्यमधिकृत्य सिद्धान्तान् ये मिमण्डयिषन्ति

(प्रतिपिपादयिषन्ति) मृत्योः मोक्षस्वातन्त्र्यस्य विषयो यदायाति भ्रमावर्ते समापतन्ति । एतादृशस्वातन्त्र्यमधिकृत्यैव विरचितमिदं नाटकम् । मृत्योः पुरतः प्रतीपं तिष्ठन् मृत्युं पर्यवतिष्ठति वैद्यः। धर्मः राजकीय-प्रक्रियाः कला इत्यादिसर्वसंस्थाः मृत्योः पुरतः असंगता भवन्ति । इदमेव नाटकस्य वस्तु।

नाटकमिदं संस्कृते अनूद्य सन्मान्याः डा.डा. वेणीमाधवशास्त्री बी. जोशी महोदयाः बहूपकारं कृतवन्तः । तेभ्यः पुनरेकवारं हार्दानि नमांसि समर्पयामि ।

इति–

**27-8-2019** चन्द्रशेखर कम्बारः

# ಮುನ್ನುಡಿ

ಖ್ಯಾತ ಪಂಡಿತರಾದ ಸನ್ಮಾನ್ಯ ಡಾ. ವೇಣೀಮಾಧವ ಶಾಸ್ತ್ರಿ ಬಿ. ಜೋಶಿ, ಕಾವ್ಯಚೂಡಾಮಣಿ ಅವರು ನನ್ನ "ಮಹಾಮಾಯಿ" ನಾಟಕವನ್ನು ಸಂಸ್ಕೃತಕ್ಕೆ ಅನುವಾದ ಮಾಡಿ ನನ್ನ ಬರೆವಣಿಗೆಯ ಗೌರವವನ್ನು ಇಮ್ಮಡಿಗೊಳಿಸಿದ್ದಾರೆ. ಅವರಿಗೆ ಹೃತ್ಪೂರ್ವಕ ವಂದನೆಗಳನ್ನು ಸಲ್ಲಿಸುತ್ತೇನೆ. ಹಿರಿಯರಾದ ಸನ್ಮಾನ್ಯರು ಆ ಕೃತಿಗೊಂದು ಮುನ್ನುಡಿ ಬರೆಯಲು ಕೇಳಿದ್ದಾರೆ. ಹಿರಿಯರ ಮಾತು ಮೀರಬಾರದೆಂದು ಸಂಕೋಚದಿಂದಲೇ ಒಂದೆರಡು ನುಡಿಗಳನ್ನು ಬರೆದಿದ್ದೇನೆ.

ಶಿಷ್ಟ ಸಾಹಿತ್ಯದಲ್ಲಿ ಸಾವಿನ ದೇವತೆ ಯಮನ ಬಗ್ಗೆ ಸಾವಿತ್ರಿ, ಮಾರ್ಕಂಡೇಯ ಮುಂತಾದ ಕತೆಗಳಿವೆ. ನಮ್ಮ ಜಾನಪದದಲ್ಲೂ ಕತೆಗಳು, ನಂಬಿಕೆ, ಆಚರಣೆಗಳು ಬೇಕಾದಷ್ಟಿವೆ. ನನ್ನ ನಾಟಕ ಜನಪದ ನಂಬಿಕೆಯಲ್ಲಿ ಬರುವ ಕತೆಯನ್ನು ಆಧರಿಸಿದೆ. ಜಾನಪದದಲ್ಲಿ ಸಾವಿನ ದೇವತೆ ಶೆಟಿವಿತಾಯಿ, ಎಲ್ಲರ ಹಣೆಬರಹ ಬರೆಯುವವಳು ಅವಳೇ, ಹುಟ್ಟಿದ ಹದಿಮೂರನೆ ದಿನ ಅದರ ಹಣೆಬರಹ ಬರೆಯಲು ಬರುತ್ತಾಳೆಂದು, ಆಗ ಅವಳಿಗೆ ಬೆಳಕು ಬೇಕೆಂದು, ಆ ದಿನ ಮನೆಯವರು ಕೂಸಿನ ಬಳಿ ದೀಪ ಹಚ್ಚಿ ಇಟ್ಟಿರುತ್ತಾರೆ. ದೇವತೆಯ ಈ ಕಲ್ಪನೆಯನ್ನು ಆಧಾರವಾಗಿಟ್ಟುಕೊಂಡ ಕತೆಗಳೂ ಇವೆ. ಮಾನವನ ಸ್ವಾತಂತ್ರ್ಯದ ಬಗ್ಗೆ ಸಿದ್ಧಾಂತಗಳನ್ನು ಮಂಡಿಸಿದವರು 'ಸಾವಿನಿಂದ ಸ್ವಾತಂತ್ರ್ಯದ' ವಿಷಯ ಬಂದಾಗ ಗೊಂದಲದಲ್ಲಿ ಬೀಳುತ್ತಾರೆ. ಇಂತಹ ಸ್ವಾತಂತ್ರ್ಯವನ್ನು ಕುರಿತೇ ಬರೆದ ನಾಟಕ ಇದು. ಸಾವನ್ನು ನೇರವಾಗಿ ಎದುರಾಎದುರು ನಿಂತು ಎದುರಿಸುವವನು ವೈದ್ಯ. ಧರ್ಮ, ರಾಜಕಾರಣ, ಕಲೆ ಮುಂತಾದ ಸಂಸ್ಥೆಗಳೆಲ್ಲ ಸಾವಿನೆದುರು ಅಂಸಗತವಾಗುತ್ತವೆ. ಇದು ನಾಟಕದ ವಸ್ತು.

ಈ ನಾಟಕವನ್ನು ಸಂಸ್ಕೃತಕ್ಕೆ ಅನುವಾದ ಮಾಡಿ ಸನ್ಮಾನ್ಯ ಡಾ.ಡಾ. ವೇಣೀಮಾಧವಶಾಸ್ತ್ರೀ ಬಿ. ಜೋಶಿ ಅವರು ನನಗೆ ಉಪಕಾರ ಮಾಡಿದ್ದಾರೆ. ಅವರಿಗೆ ನನ್ನ ಹೃತ್ಪೂರ್ವಕ ನಮಸ್ಕಾರಗಳು.

ಇಂತೀ

**27-8-2019** ಚಂದ್ರಶೇಖರ ಕಂಬಾರ

॥ श्रीः॥

**डा. श्रीनिवास वरखेडी**
कुलपतिः
कविकुलगुरुकालिदास–
संस्कृतविश्वविद्यालयः
रामटेक् नागपूर
महाराष्ट्र

# हृदयवाणी

त एव पदविन्मासाः ता एवार्थविभूतयः
तथापि काव्यं नव्यं स्यात्कवेः ग्रथनकौशलात्।

**– रसार्णवसुधाकरः**

दृष्टपूर्वाः अपि ह्यर्थाः काव्ये रसपरिग्रहात्
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः॥

**– ध्वन्यालोकः ४.१**

सत्यार्थतामेति पद्यद्वयमेतत् महामायिनीति रूपकविषये। भारतीयदर्शनपरम्परायां मृत्युजिज्ञासा नापूर्वा। लोकयात्रायाः अन्तिमं यच्चरणं तन्मृत्युर्नाम। तत्वज्ञानाय प्रवृत्तं दर्शनं कथं काव्यकथा भवेत्? कथंतरां मृत्युरूपं रौद्रं वस्तु कविकल्पनाविकासाय युज्यते? एवं कौतुकेन नाटकस्यास्य पठने प्रवृत्तस्य मे मनः कवेर्ग्रथनकौशलेन काव्यस्य कल्पनाविलासवैभवेन तत्रैव लग्नमभवत्। दिवारात्रं काल एव व्यरंसीत्। महामाया मे मानसम् आवृणोत्। भारतीयज्ञानपीठपुरस्कारेण समलङ्कृतः श्रेष्ठकन्नडनाटककारः

श्रीचन्द्रशेखरकम्बारः अप्रतिमः कविः। तदीयं 'महमायि'नाटकम् आधुनिकवाङ्मयस्य चिरनवीनं प्रातिभं रूपम्। जनपदशैल्या औपनिषदस्य दार्शनिकस्य तत्त्वस्य निरूपणमिति अनितरसाधारणी प्रतिभासम्पत्। अत्र कवेः संवेदनं देशीयम्। रीतिरपि तादृंशी। समग्रं नाटकं जनपदपुराणशैलीमनुसरति। निरन्तरं सत्त्वपूर्णानि संवादवाक्यानि कन्नडभाषायाः नैसर्गिकं ध्वनिगर्भितम् अर्थप्रकाशनसामर्थ्यं विस्तारयन्ति। तदेतादृशं गभीरं जनपदपठ्यं सरसं रूपकं संस्कृतगिरा कथन्तराम् अनुवादमर्हतीति कुतूहलेन संस्कृतानुवादसंस्करणं मया आमूलचूडं पठितम्। तदनन्तरं मूलमपि अवलोकितम्। कन्नडं मूलम् आहोस्वित् कन्नडात् अवतारणमिति नैव विज्ञातम्। एवं भवति आचार्यवेणीमाधवशास्त्रिणाम् अनुवादमाहात्म्यम्। संस्कृतस्य नैसर्गिकी रीतिः न परित्यक्ता। तथापि मूलनाटकस्य देशभाषया प्रस्फुटितः भावः न तिरस्कृतः। अतः संस्कृतभाषा स्वप्रकृतिं सम्प्राप्य प्राकृतरूपेण भावं व्यञ्जयन्ती देशीयतामापन्ना वसन्तवृक्षलता इव नूतनशोभां प्राप्नोति।

संस्कृतनाटकस्य प्रसङ्गद्वयमुल्लिखन् तत्स्वारस्यं प्रकाशयितुं कामये। सञ्जीवशिवः वैद्यः नाटकस्य नायकः। मृत्युदेवता तस्य माता। तां प्रत्याह सञ्जीवशिवः।

सञ्जीवशिवः – मम तावत् भग्नस्वप्न एको वर्तते, भणामि किं मातः ?

माता – कथय ।

सञ्जीवशिवः – कानने निर्झरस्य समीपे हरिद्वृक्षः, तस्याधः एकः पर्णकुटीरः तत्राङ्गणे द्वित्राणि पुष्पगुल्मादीनि। तत्र अहमस्मि रोगिभिः साकम् । अन्तः राजकुमारी भेषजं घर्षन्ती आस्ते, मम

कुटीर इव मम अहङ्कारोऽपि लघुरेव। मम च भेषजेन निरामयाः जाता रोगिणः ''अहो कियान् शोभनो वैद्यः'' इति उद्गिरन्ति । तावता एव मम हृदयं पीनं भूत्वा भगवद्दर्शनेन इव सार्थक्यमनुभवति । परं मातः, इदानीं पीनवक्षसि न किमप्यवशिष्टम्। यतोहि अन्तर्गृहे, भेषजं घर्षन्ती राजकुमारी नास्ति। अतः भेषजमपि नास्ति । तस्मात् रोगिणो न सन्ति, भगवानपि न दृश्यते, सम्प्रति, जीवनं यापयितुं भयं जायते, मातः।

इयं सरलसुभगशैली मूलकारम् अन्यूनानतिरेकेण अनुकरोति। न किञ्चिदधिकम्।

अपरत्र च – नाटकान्ते यदा सञ्जीवशिवः अमरत्ववरेण अनुगृहीतः तदा तस्य वचनम् –

''सञ्जीवशिवः – मृत्युभयापेक्षया तद्रहितात् जीवितात् मम अधिकतरं भयमस्ति ।

अमरो भूत्वा त्वत्तः दूरतरभवनापेक्षया तव सुतो भूत्वा मनुष्य इति भवनमेव मे सौभाग्यकारकं मातः।''

इमानि मार्मिकाणि अर्थगर्भितानि वचनानि नाटकस्य गौरवं वर्धयन्ति । एतादृशानि शतशः स्थलानि सम्यक् अनुवादकेन निर्व्यूढानि। अनुवादकर्म बुद्धिप्रतिभाकौशलादिसाध्यं कार्यम्। काव्यं प्रतिभामपेक्षते। तदनुकृतिः प्रतिभां, बुद्धिं, भाषाकौशलं, परिश्रमम्, इङ्गितज्ञतां च अपेक्षते। सर्वे एते गुणाः सम्मिलिताः अनुवादके विद्वत्कवौ आचार्यवेणीमाधवशास्त्रिमहाभागे। सैषा अनुकृतिः वस्तुतः अनुसृष्टिः मूलस्य भाषान्तरेण पुनःसृष्टिः। यदिच मूललेखकः संस्कृतमाश्रित्य अरचयिष्यत् तन्नाटकम् एवंरूपमेव अभविष्यदिति मे विश्वासः।

संस्कृतं मन्दंमन्दं वार्धक्यमुपैति। तस्य कायकल्पचिकित्सया तारुण्यमासादयितुम् एतादृशाः अनुवादप्रयोगाः अत्यन्तापेक्षिताः। शास्त्रिमहोदयेन कन्नडलोकात् उद्धृतं नाटकरत्नं महामायिनीद्वारा संस्कृते प्रविष्टं तस्य श्रीमत्वं समेधयतीति अत्र नास्ति सन्देहः। तदर्थं मूलकविं श्रीकम्बारचन्द्रशेखरनामानं महानुभावं कविमार्गमनुसर्तारं आचार्यवेणीमाधवशास्त्रिमहोदयं च भृशमभिनन्दामि ।

**कम्बारहस्तकलया रचितं सुपात्रं**
**यन् मृण्मयं सकलसम्भृतपूर्णगात्रम्।**
**श्रीशास्त्रिवह्निचितिना परिपक्वमेतत्**
**रूपान्तरं भजति वै सकलैरुपास्यम्।।**

रामटेक
गोकुलाष्टमी
23-8-2019

**श्रीनिवासः वरखेडी**
कुलगुरुः कविकुलगुरु
कालिदास संस्कृत विश्वविद्यालयस्य
नागपुरम्

।। श्रीः।।

# अनुवादक-व्याहारः

ज्ञानपीठपुरस्कारेण समलंकृताः डा. चन्द्रशेखर कम्बार महोदयाः अप्रतिमप्रतिभान्विताः नाटककारा इत्यत्र न बिन्दुमात्रोऽपि सन्देहः । 'महामायीति'-कन्नड नाटकं तावदनितरसाधारण-रमणीयांशैः सहृदयानां हृदयानि रञ्जयतीति तु निश्चप्रचं वचः । स्वातन्त्र्यं तावत् मानवस्य परमोन्नतश्चाधिकार इत्येव सर्वेषामनुभवः । प्रीतेः सहयोगेन स्वातन्त्र्यस्य वैशिष्ट्यमधिकतरं जायत इति जगतः सुन्दरं नियमं बोधयति सन्देशरूपेण। प्रेमदेवतायाः परमानुग्रहेण अथवा पवित्रप्रीतियोगेन मृत्युदेवताया : कृपाशीर्वादं प्राप्य नायकः संजीवशिवः मृत्युमपि जयतीति फलश्रुतिमवलोकयामः । संजीवशिवः महामायिन्याः दिव्य चिकित्सानुग्रहं विहायापि स्वातन्त्र्यं प्रीतिं च चिनोतीत्येव उपसंहारं पश्यामः । सर्वथा तेषां नाटकीय-प्रक्रियानैपुण्यं आद्यन्तमेव प्रतिस्फालितमित्यत्र नैव सन्देहः ।

प्रत्येकस्मिन्नपि पात्रे जीवकलां समापूर्य सत्त्वयुतसंभाषणैः नाटकस्य अत्यद्भुतदृश्यानि सहृदयानां हृदयान्तराले यथा अविस्मरणीयानि भूत्वा तिष्ठन्ति तथा विहितानि सन्ति । श्रीचन्द्रशेखर महोदयानां चारुतरदृश्य-रचना-चातुरी तावत् प्रशंसनीया इत्यत्र नैव सन्दिहामहे । पात्रचित्रणस्य कलाकौशल्यं तावत् नाटकस्य प्राग्रहर सुषमांश इत्येव वक्तुं प्रभवामः । विदूषकस्य मदनतिलकस्य रसमयं हास्यं तावत् रसराजं शृङ्गाररसं मनोज्ञमेव परिपोषयति । तस्य मञ्जरीव्याकरण सन्दर्भस्तु नाटककारस्य गभिरां रसाभिज्ञतां अभिव्यनक्ति, मनोरञ्जनस्वारस्यं च समानयति ।

मूलनाटकस्य स्वारस्यं यथा हृदयंगमं भवति तथा संस्कृतानुवादेऽपि समानेतुं बाढं प्रयतितमेव मया । प्रतनकालीनप्रसङ्गोऽयं संस्कृतभाषायामनुवादः अतीवसामञ्जस्येन नाटकस्य कथावस्तु इति संस्कृतभाषायामनुवादः अतीवसामञ्जस्येन समन्वितोऽस्ति । मूलनाटकं तावत् यद्यपि कन्नडभाषयां वर्तते, तत्रच या वाग्गुम्फनवैखरी पात्रचित्रणस्य रामणीयकं वर्धयति अनुवादेऽपि तथैव मञ्जुलतामानेतुं प्रयासःकृतोऽस्ति । ग्रामीणभाषायाः प्रयोगो यत्र कन्नडनाटके दृश्यते तस्य च अनुवादे प्राकृतभाषायाः प्रयोगोऽपि विहितोऽस्ति प्रसङ्गस्य स्वारस्यरक्षणार्थम् । सर्वथा कन्नडेतर भाषाप्रान्तीयानां कृते अनूदितमिदं नाटकं बहूपकाराय भवतीति भावयामि। सर्वथा रसिकमनांसि तोषयितुमिदम् अनूदितनाटकं स्वीयगुणोत्कर्षैः समर्थं भूयादिति आशास्ये ।

अनुवादकः मूलकृतेः अनुवादनप्रक्रियायां बहुलं क्लेशमनुभवति चेत् तत् मूलकृतेः बाढं वैशिष्ट्यं सूचयतीति मन्ये । मूलकृतेः संभाषणस्य वा भाषायाः वा स्वारस्यं सर्वांशेनानुवादे समानेतुं यद्यपि न शक्येत तथापि संस्कृतभाषायाः समृद्धिः शब्दसंपत् वा तथा कर्तुं बहुतरं समर्था भवतीति भावयामि । सर्वथा महामायीति मूलनाटकस्य स्वारस्यं यथा न्यूना न भवति तथा कर्तुं सर्वविधप्रयत्नाः विहिताः सन्ति ।

कविकुलकुरु कालिदास संस्कृतविश्वविद्यालयस्य कुलपतयः विद्वदवतंसाः वरखेडी श्रीनिवासाचार्यवर्याः प्रास्ताविकलेखनेन अनूदित नाटकस्यास्य परमां शोभामानीनयन् इति तेभ्यः भूयोभूयः कार्तज्ञं समर्पयामि। अलंकारप्रियास्ते विद्वद्वरेण्याः श्रीनिवासाचार्याः बहुतरं मद्विषये प्रशंसावचनं उपन्यास्यन् । तथापि-

**"प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः"**

इति कालिदासवचनसरणिमनुसृत्य धीरोत्तमैरुपन्यस्ताः प्रणुतिगिरः मम गुरुचरणानां पण्डितप्रकाण्ड ब्रह्मश्री भालचन्द्रशास्त्रिणां विद्यानुग्रहस्य सत्त्वेषु प्रत्ययमादधति ।

सदयहृदयानां कविवरेण्यानां प्रथितयशसां चन्द्रशेखर कम्बारमहोदयानां प्रास्ताविक-वाणीविलासेन अनूदितं नाटकमिदं रंरमीति। तेषां प्रश्रयान्विताः कृतकेतराः शब्दास्तावत् सौजन्यावच्छेदकाः सन्तीत्येव भावयामः ।

पुस्तकमिदं प्रकाशयितुं कोविदाग्रेसराः बहुश्रुतकर्तव्यदक्षाः कर्नाटक-विश्वविद्यालयस्य भूतपूर्वकुलसचिवाः डा. प्रो. महादेव जोशी महोदयाः स्वीयरूपाप्रकाशनसरण्यां अवकाशं दत्तवन्तः इति तेभ्योऽपि भूयो भूयः धन्यवादान् समर्पयामि ।

ग्रन्थस्यास्य मुद्रकेभ्यः श्रीजगदीश घाणेकर महोदयेभ्यः तथा परिश्रमातिशयेन मेधायन्त्रविन्यासेन बहूपकारं कृतवद्भ्यः श्री जावेदखान तडकोड-महोदयेभ्योऽपि धन्यवादन् समर्पयमि । गृहेऽपि लेखनकार्ये बहुतरं सहकारं वितीर्य उपकृतवती मम गृहिणी श्रीमती रमादेवी अपि विशेषोल्लेखेन अभिनन्दनमर्हति । सर्वथा अनूदितनाटकमिदं संस्कृत क्षेत्रे लब्धास्पदं संस्कृतरसिकमनांसि रञ्जयति चेत् परिश्रमो मे सार्थको भवेदिति भावयामि ।

**धारवाडनगरी**
गणेशचतुर्थी
**2-9-2019**

डा. वेणीमाधवशास्त्री भा. जोशी
'भामती' बेन्द्रेमार्गः
साधनकेरी धारवाड-५८०००८
M-9449357212

॥ श्रीः॥

# विदुषामभिप्रायाः

> कम्बारमहोदयेन लिख्यमानानि नाटकानि पद्यानि वा
> पाश्चिमात्येष्वपि नेति तु निश्चप्रचं वचः ।
>
> **यू आर्. अनन्तमूर्तिः**

कम्बारमहोदयाः कन्नडरङ्गभूमौ वृष्टिमानयन् ऋष्यशृङ्गमहर्षिः। गीतानि नाम केवलं नाटककम्पनीगीतान्येव इत्ययमर्थो यदा आसीत् तदा ऐदम्प्राथम्येन ''आत्मविनियोजकैः'' ''गद्यात्मकैःगीतैः समवेतानि नाटकानि विरचितवतः। कम्बारमहोदयस्य कवित्वसामर्थ्यस्य विषये मम तावत् आपारं गौरवं, भयं, असूया च । अस्माकं मध्ये नाटककारः पुनश्च कविर्जातः, तत्तु कम्बारमहोदयानां मुखान्तरेण । तेषां जोकुमारस्वामिनं (नाटकस्य नाम) अहमन्विष्टवान् आहोस्वित् जोकुमारस्वामी एव मामन्विष्टवान्, कथमपि मम तावत् तस्य प्रयोग प्रक्रियाविषये 'युरेका' (नूतनविषयानन्दः) इति वचनस्य सरलोऽयमनुभवः।

न केवलं कन्नडसाहित्ये एव न, समग्रेऽपि देशे यथा कम्बारमहोदयाः तीव्रतरं भूगन्धं पूरयित्वा, तेन साकं, सत्यत्वं, तथा आधुनिकत्वादिकमपि देहस्य नरनाडीषु आत्मसात् कृत्वा सृजनशील नाटककारा वर्तन्ते तादृशजनः दुर्लभ इत्येव । ममाभिप्राये तावत् देशस्य अद्यतनेषु अनूनकनाटककारेषु कम्बारमहोदयाः अद्वितीया एव। तेषां स्थाने पुरुषान्तरं चिन्तयितुं मम तावदसाध्यमेव ।

**बी. वी. कारंत**

।। श्रीः।।

# विनोदचैतन्यस्य नाटककारः- चन्द्रशेखर कम्बारमहोदयः

डी. आर. नागराज

षष्टितमदशकस्य प्रारम्भे चन्द्रशेखर कम्बारमहोदयाः स्वीयं प्रथमनाटकं 'ऋष्यशृङ्गः' इति यदा विरचितवन्तः तदा कन्नडनाटकस्य इतिहासे एकां क्रान्तिं प्रारब्धवन्तः इति कल्पना तेषु नासीत् । परम्परागतस्य 'बयलाट' (अनावृताङ्गण नाटकं) नाटकस्य प्रतीके विरचितं तन्नाटकं ''परकीयता'' तथा 'अस्मिता' (अस्तित्वबोधः) इदं विषयद्वयस्य चर्चां कुर्वत् नव्येन वस्तुना अन्तर्हितमासीत् । नाटकस्वरूपप्रदानविषये स्वयं गमनार्हमेकं प्रयोगं कृतवन्त इति कम्बारमहोदयाः नैव चिन्तितवन्तः। तस्मात् प्रागेव अत्यन्तमेव आकर्षके 'कथयामि शुणु' इत्यस्मिन् खण्डकाव्ये एतादृशमेव विचारं कलितवन्तः आसन् । (अद्यापि कम्बारमहोदयाः, भारतस्य प्रमुखकविषु अन्यतमाः इति तु मम दृढो विश्वासः) ....................

॥ श्रीः॥

# महामायिनीं प्रति किञ्चित्

जी. एस्. आमूर
अनुवादकः- सी. नागण्णः

समग्रेऽपि देशे संप्रति प्राग्रहरनाटककारेषु अन्यतमः चन्द्रशेखर कम्बारमहोदयः कर्नाटके वास्तवेतरनाटकानामन्वेषणसन्दर्भे साहित्यरचनायां प्रवृत्तः । एतस्मिन् स्तरे लेखकस्य महिमान्वितशोधो नाम पुराणस्य मौल्यानां सहृदयानां पुरतः उपस्थापनम् ..............
..................................

।। श्रीः।।

# वचनमेकं

'महामायी' संप्रति अंकित पुस्तके (प्रकाशने) द्वितीयं मुद्रणं लभमाना अस्ति । कम्बत्तळ्ळी प्रकाशमहोदयानां कृते वन्दनानि वदामि। नाटकमिदं आंग्लभाषयां तथा अनेकासु–भारतीयभाषासु अनूदितं, व्यापकमेव चर्चास्पदं च जातमस्ति । ये निर्देशकाः, विद्वांसश्च चर्चाविमर्शं कृतवन्तः तेभ्यः वन्दनानि करोमि । नाटकस्यास्य आंग्लभाषायाः अनुवादस्य कृते देशस्य महोन्नतविमर्शकाः सन्मान्याः श्री जी. एस्. आमूर महोदयाः महिमान्वितं प्रास्ताविकं लिखित्वा दत्तवन्तः । मम सुहृद्वर्याः सी. नागण्णमहोदयाः मनोज्ञमेव कन्नडभाषयां तस्य अनुवादमपि कृतवन्तः । तच्च अत्र सदुपयोगं कृतवानस्मि । तेभ्यः तथा मम नाटकस्य कृते ये सुहृदः दिवंगताः डी. आर. नागराजमहोदयाः स्वाभिप्रायं लिखितवन्तः तेभ्योऽपि भूयो भूयः नमस्काराः ।

**चन्द्रशेखर कम्बारः**

# महामायिनी

## पात्राणि

| | |
|---|---|
| गिरिमल्लिका | सेडुमारी (कालमारिका) १, २ |
| माता (शटवीदेवी) | राजा |
| शिवः | मारः |
| संजीवशिवः | मंत्री |
| राजकुमारी | सैनिकः |
| पुष्पगंधा | सेवकः |
| मदनतिलकः | सेवकी |
| मञ्जरी | पक्षी |
| मञ्जर्याः भूतः | कीर्तिशिवस्य भूतः |
| मदरंगी | भूताः |
| स्थविरा | महिला |

।। श्रीः।।

श्रीगुरुः शरणम्

# महामायिनी

एवमियं नान्दी

**गिरिमल्लिका** –ॐ प्रथमं सावलगीलिङ्गं प्रणम्य नाटकं प्रारभामहे । इयं तु शटवीदेव्याः कथा शटिवी–इतीदं निधनदेवतायाः नामधेयम् । (मारिकाम्बा इति!)

नाटकस्य नान्दीप्रक्रियायां तस्या एव नामधेयं स्मरणीयमासीत् । परं तस्याः (कु)दृष्टिप्रवणता नान्दी प्रक्रियापेक्षया भरतवाक्यं प्रत्येव। परं भरतवाक्येन नाटकं प्रारभमाणमस्ति किम् ? तस्याः परिचयेन प्रसङ्गः संप्रति प्रारभमाणश्चेत्, हन्त! सा एव समागता, (मातुः प्रसाधनं कुर्वाणो नटः प्रविशति)

**माता** – माता चाहं सर्वचराचरस्य, सर्वप्रभायाः, आकाराणां च अन्तिमो बिन्दुः ।

सर्वप्रत्ययस्य, सर्वास्तित्वस्य जननी ।

भवतां दृक्पुरतः एका स्थविरा

प्रत्येकस्यापि जीवस्य जीवानां वा तेषां तेषामन्तिमक्षणेषु तेषां भावानुरूपेष्वाकारेषु प्रत्यक्षा भूत्वा दर्शनं देयमस्ति (मया) । तस्मात् क्षणे क्षणे नेपथ्यं परावर्त्य वेषबन्धनादिकं कर्तव्यम्ः,

शटिवीजननीति तु मम देशीयं नामधेयम् ।

– क्षम्यताम् । गिरिमल्लिके ।

**गिरिमल्लिका** – मातः,

**माता** – अग्रे कथय (इति गच्छति)

**गिरिमल्लिका** – मातुः वचनं नैवावगतमिति मन्ये, अस्ति किल शटिवीमाता मारिकाम्बा इत्युक्तौ मृत्युदेवता । न केवलं यूयं वयं, देवा अपि भीताः भवन्ति, तथापि निवारयितुमशक्यम् अन्तिमलक्ष्यम् ।

**शैले शैले मन्दिरमस्याः**
**अद्रावपि नः शटवीमातुः**
**दिशि दिशि तस्या नाम च भिन्नं**
**अस्माकं दिशि शटवीमाया**

अहो, तत्रास्ति किल, मायिनीशैलमूले गुहा, तत्र च प्रवेशः प्रारभते यश्चाधोलोकः तस्यैव एषा स्वामिनी।

तावद्वत्सरपर्यन्तं निगदितानि सुभाषितानि श्रावं श्रावं व्रताचरणं कारं कारं विपिनस्य तरुगुल्मानां कन्दमूलानां गुणधर्मादीनां परिचयम् आत्मसात् कृत्वा वैद्यविद्यायां महत्कार्यं साधयित्वा सर्वेषु दिगन्तेषु रुचिरतरविशेषणैः स्तूयमानः कीर्तिमानास्ते ।

कियानपि वा भयङ्करो भवतु रोगः एषस्तावदेकवारं नाडीस्फुरणं विलोक्य औषधं ददाति चेत् निरामयो यो न भवति तादृशो रोगी समग्रेऽपि राज्ये अस्मिन् नरलोके न भवति । किमिति ज्ञायते वा ? माता पुत्राय दत्तस्य वरस्य रहस्यमेकं उक्त्वा युष्मान् विस्मापमयामि ।

संजीवशिवः रुग्णस्य नाडीस्फुरणं यदा परीक्षते तदा रोगिणं वामेन वा दक्षिणेन माता तावत् प्रत्यक्षा भवति । माता तावदेवं यदा अनुजिघृक्षति तदा संजीवं

तथा मां विना (न कोऽप्यन्यः द्रष्टुं शक्नोति) । न केनाप्यन्येन दृष्टा भवति । माता यस्मिन् पार्श्वे प्रत्यक्षा भूत्वा तिष्ठति तदवलम्बनेनैव सञ्जीवः रोगिणं स्वीकरोति, आहोस्वित् जहाति । यदा रोगिणं दक्षिणेन सा प्रत्यक्षा भवति चेत् तदा चिकित्सां करोति । यदि वामेन प्रत्यक्षा भवति, तदा- हे परशिव, शरण्य, सदयोभव इत्युक्तावपि संजीवस्तु तस्य रोगिणः चिकित्सां नैव करोति । माता तनयाय दत्तो वरस्तु अयमेव ।

मात्रा सुतस्याभ्युदयं विना किमन्यदिष्यते? इदमिदानीं यथा यथा रोगिणां संख्या वर्धते तथा तथा सस्यजातिचयः नैव वर्धते इति दुःखाकरोति।

तदर्थमेव मूलिकां विनैव नवनवान् रुक्प्रतिक्रियाविधानान् अन्वेषयन्नास्ते । अतएव क्षणावकाशः समयो यदि लभ्यते चेत् तदापि विपिनं अनुधाव्य, तरुमूलिकानां शोधकार्ये व्यापृतो भवति।

नवयौव्वने वयस्यैःसह वनेचराणां प्रलापेषु व्यापृतेन भवितव्ये समये बालोऽयं तावत् एवंरूपो एकाङ्गी भूत्वा, रोगिणां रोगविषये चिन्तनं कुर्वन् जामिताक्षणेषु तया एकया हरिण्या नेत्रावत्या सह खेलादिकरणं तावत् तस्य वयसः सहजेतरमेव ।

असौ तावदस्य वैद्यशाला, त्रयस्तावद् रोगिणो वर्तन्ते । सा तावदनाथा महिला तस्याश्च जीवन् एक एव सुतः आधारभूतः । गोपालकेन तेनैव तस्याः स्पष्टं प्रभातम् । अपरश्च मारः मृतवप्रं खनति, सतु स्मशानवासी मृतैः सह संभाषणकार इत्येव प्रसिद्धः।

केरलस्य मलयालकानां मान्त्रिकाणां, बंगालस्य च तान्त्रिकाणां कृते, मृतसूतिकानां हस्तकपालानां वितरकः ।

पापपुण्यादीनां एकमपि न लगति, मुग्धः, भयस्थितः । भये अव्यवस्थितमिश्रणं पश्यन्, शयालुः सः स्वप्नायते । गृहे यदा शवः परिपतति, तंसन्दर्भं विहाय अन्यदा न कदापि तं स्मरति कोऽपि । पुरत श्चायाति चेत् न कोऽपि तं लक्ष्यपथमानयति भवन्तोऽपि तथैव । तं स्मृतिपथात् निष्कासयन्तु नाम।

चरमस्तु नटभयङ्करः आस्थानस्य विदूषकः। स तु दृढहठो वृद्धः, मरणभयात् सर्वदा यस्य कस्यापि वेषे तथा नामधेये वर्तमानः इति तस्य स्वस्यैव किमपि नामधेयमिति नास्ति। एतावदेवेति न, कदा कस्य वेषे वर्तत इत्यपि न ज्ञायते । सौकर्यार्थं संप्रति तस्य मदनतिलक इति नाम्ना आकारयामः । संप्रति पश्यन्तु–

**माता स्वसान्निध्यमवतारयति**

(संजीवशिवस्य वैद्यशाला हरिणी नेत्रावती यथेष्टं तत्र सञ्चरति) मदनतिलकः वृक्षोपरि हस्तमुपन्यस्य शनैरा क्रन्दयन् एकत्र भित्तिमवलम्ब्य आसीनोऽस्ति । अपरत्र बालमेकं अङ्के विन्यस्य चिन्तया एका महिला उपविष्टास्ति । स्थविरो मारः उदरोपरि हस्तमुपन्यस्य मध्ये उपविष्टोऽस्ति। मदनतिलकं पश्यन्नेव प्रत्यभिज्ञाय स्वपीडां विस्मृत्य तस्य सकाशे आयाति ।

मारः – (हसन्) त्वं तावत् राजास्थानस्य हास्यकारी, मिथ्या श्यामः खलु न ?

**मदनतिलकः** – अथकिम्, उरोवेदनया–म्रियमाणोऽस्मि । महोदय मां विलोक्य हसतितरां, भवान्

मारः – ममापि उदरपीडा, हास्यकर, तथापि त्वां विलोक्य हासः समागतः । तस्मिन् दिने त्वं शिवरात्रौ शिवस्य वेषं धृत्वा नर्तितवान्किल । वयं सर्वे तावत् शिवं विहाय तवैव पदौ गृहीतवन्तः खलु । भवान् किं सामान्यः? यदा यदा तत् स्मृतिपथमायाति तदा हासः समागच्छति ।

**मदनतिलकः** – ओः महोदय, तदतीत्य संप्रति उपदशाः वर्षाः समभवत्। ततःप्रभृति इदानींतनपर्यन्तं हसन्नेवास्ते किम् भवान्?

**मारः** – ओह, सर्वमपिं तत् ह्यः एव समभवदिति भाति, विस्मर्तुं शक्यते किम् ? शिवमेव दृष्ट्वा हसन् भण्डो भवान् । तवापि उदरपीडा इतितु विश्वसितुं शक्यते किम् शिव? संप्रति रोगिणो वेषं कृतवान् किम् आहोस्वित्, रोग एव समापतितः?

**मदनतिलकः** – उरसि पीडा महोदय, पीडा, उरस्तावदेकं डिण्डिम इव ताड्यमानो वर्तते, किं वा वदामि ते ?

मारः – अहो, पश्य वैद्यःसमागतः, तस्य पुरतो वा भवतु सत्यं वद तात, (संजीवशिवः समायाति)

**मदनतिलकः** – स्वामिन्, वैद्यमहाशय उरसि मृत्युस्तावत् उच्चैराक्रन्दनं कुर्वन्नास्ते । चिरायते चेत् तदनु पश्चात्तापं कुरुषे, शीघ्रमागच्छ तात!

**महिलाः** – वर्तमानं एकमपि वा पुत्रं उज्जीवय तात .......

**संजीवशिवः** – (बालं प्रति गच्छन्) कस्मात् कालात् एवं ऋजुकशरीरस्तिष्ठति ?

**महिला:** – घंटाद्वयात्! तस्य प्राणस्पन्दः इदानीमपि, टकटकायते। भवान् तावदेकवारं नाडीं स्पृशन् पश्यति चेत् अलम्! सः जीवतीति वदन्ति। शीघ्रमेव नाडीं स्पृश, तात!

**मारः** – आतपे भ्रमितं वा ?

**महिला** – तात! पर्वतस्य मायादेव्याः गुहां प्रति गतः, गृहमागत एव सुप्तः ।

**मारः** – किमर्थं तं तत्र गन्तुं मुक्तवती? गुहां प्रविश्य बहिरागतः कोऽपि नास्तीति त्वं न जानीषे । अहो तत्र पश्य आगतमेव ?

(सहसा मारदेवं पश्यन् इव भयभक्त्या विकसित नयनाभ्यां प्रतिपालयन् –

**अहो आगतः,**
**दण्डिनीमाराम्बायाः सार्थवाहः ।**
**विवृतरदनकपालास्थिपञ्जरवेषा**
**माता समागतवती, मातः जय जय ।**

ततः प्रविशति (शटवीदेवी) शटवीमाता । सा मारेण दृष्टा इति संजीवस्य आश्चर्यं जनयति । मारस्तु मातरं विलोक्य भीतोऽस्ति । माता तावत् संजीवशिवं मारं च विहाय अन्येन नैव दृष्टा भवति । परं तयोः मुखयोः यत् परिवर्तनमासीत् मदनतिलकः तत् परिवीक्षते। शटवीमाता तावत् हसन्ती मारस्य सकाश-मागत्य तं दक्षिणेन तिष्ठति । संजीवशिवस्तु धावन् आगत्य मारस्य नाडीस्फुरणं पश्यन् तिष्ठति । यावत् माता तत्र तिष्ठति तावत् पर्यन्तं स्फुरणं ईक्षमाणः "भेषजं दास्यामः, निरामयो भवति" इति वदति । तदनु माता मदनतिलिकस्य सकाशं गत्वा तं दक्षिणेन

तिष्ठति संजीवशिवस्तु तत्र गत्वा मदनतिलकस्य नाडीस्फुरणं वीक्ष्य– ''भेषजं दास्यामः सर्वं सुष्ठु भवति'' इति भणति । संप्रति, संजीवशिवः मात्रे बालकं दर्शयति । माता तावत् तत्र गत्वा यत्र पतितो बालकः तं वामेन तिष्ठति । संजीवशिवस्तु खिन्नवदनो भवति ।

**संजीवशिवः** – कालस्तु अतीत एव जननि ।

**मारः** – मादृशः स्थविरो जीवितश्चेत् साधु किम् ? तात अयं बालस्तावद् जीवितव्यः (माता तिरोहिता भवति) शिव शिव!

**महिला** – एष एक एव मम आधारभूतोऽस्ति, तात !

**मारः** – अस्मादृशानां स्थविरहतकानां कृते यथा मातुः अनुग्रहो जातः तथा तव सुतस्य कृते मातुरनुग्रहः नैवजातः अम्बे! प्रतिष्ठस्व, इतः परं किञ्चिदपि कर्तुं नैवशक्यते ?

**मदनतिलकः** – सत्यं भोः एवं प्रवक्ता तावत् वैद्यः खलु ।

**मारः** – सोऽपि किंवा वक्तुं पारयति, विदूषक, तनयमिमं सः जीवयितुं शक्नोति किम् ? भवानेव वदतु ।

**महिला** – हे मम तात (अप्प?)

**संजीवशिवः** – तदैव उक्तं किलं मातः अहं तावत् किञ्चिदपि कर्तुं नैव शक्नोमि । नीत्वा याहि ।

**मारः** – भवती, यावत् रोदितुं शक्ता तावत् रुदित्वा हृदयं लघूकुरु, तावता अहमपि अवगाढयितुं गर्तं खनामि। (सास्रं) शिशूनां कृते गर्तखननापेक्षया हीनतरं कार्य मपरं नास्ति । याहि, साधयामः । मातः तं बालकं रक्षसि चेत् सः बालः रक्षितश्चेत् सुष्ठुभवति स्म । (गच्छन्ति)

**संजीशिवः** – (मारंप्रति) औषधं गृहीत्वा याहि ।

**मारः** – बालकस्य शवसंस्कारःचिराय न भवेत् । मातुः आज्ञा तावत् जाता एव । मूलं वा कन्दं वा क्वाथयित्वा पिबाम्येव तावत् ।

(इति याति, तेन सह सा महिलापि रुदती बालकं नीत्वा गच्छति । संजीवशिवस्तु अपमानेन खिन्न इवास्ति। मदनतिलकस्तु इदमवगच्छति ।)

**मदनतिलकः** – शपे शिवाय, महाभाग, यदा भवता नाडी गृहीता तदैव मया ज्ञातमेव यत् रोगो निवारित इति । इदमिदं पश्य, संप्रति हृदयमिदं कियद् वा लघुतरं जातमिति नाम, यदि ते अनुमतं चेत् पद्यमेकं गायामीति वदन् अस्मि।

**संजीवशिवः** – कृपया मास्तु पितामह, भेषजं स्रावयित्वा यावदहं दास्यामि तावत् पर्यन्तं तूष्णीं तिष्ठ ।

**मदनतिलकः** – वैद्यमहोदय, नाहं अनृतं वदामि । सत्यमेव यदि अवकाशं दास्यसि पञ्चषानि पदानि नृत्यं कर्तुं उत्साहो वर्धत एव, नर्तितुम् ।

**संजीवशिवः** – (औषधरसं स्रावयन्) अरे वृद्ध, किमभवत् ते

**मदनतिलकः** – उक्तचरमेव, जीवयितोऽहमिति ।

**संजीवशिवः** – साधु, साधु वृद्धो भवान् ।

**मदनतिलकः** – किमर्थं तावत् वृद्धो वृद्धः इति वदसि मां, तादृश वयोवृद्ध इव दृश्येऽहम् किम् ? किमपि उरसि पीडा आसीत्, किञ्चिदिव अस्वस्थ आसम्, संप्रति पश्य–

**संजीवशिवः** – किं ते वयः ?

**मदनतिलकः** – वय इति पृष्टं किम् ? देहस्यास्य तावत् सप्तति वा अशीति स्यात्, स्वस्य भारं स्वयमेव नीत्वा इतस्ततः

प्रचलति । प्रतिदिनं प्रातः कामिनीनां स्वप्नेन भारभूत इवास्ते । परह्यः एव एकां युवतीं विलोक्य समागतोऽस्मि। तामधिकृत्य पद्यमेकं गायामि वा ?

**संजीवशिवः** - अरे वृद्ध, भेषजरसं स्रावयित्वा दास्यामि तिष्ठ ।

**मदनतिलकः** - (शनैः कर्णे) तथैव, मम यौवनिविभ्रमरसस्य अभिवृद्धिः यथा भवति तथा किमपि भेषज्यं वर्तते चेत् दीयताम्, नववधूः समूढास्ति ।

**संजीवशिवः** - एवं वा, तदपि दास्यामि तिष्ठ ।

**मदनतिलकः** - तथा चेत् तावत्पर्यन्तं, यदि त्वं क्षमापयसि चेत्-पैशुन्यमननस्य अभ्यासोऽस्ति मे, यदि वदामि चेत् तव तावत् किमप्याक्षेपो नास्ति किल ।

**संजीवशिवः** - यदि भवानपि क्षमापयति चेत् पैशून्यश्रवणस्य मे तावादभ्यासो नास्ति, अतः मा वद इत्युक्तौ तवाप्याक्षेपो नास्ति किल ।

**मदनतिलकः** - हन्त! पैशुन्यस्य कथन-श्रवणयोः अभ्यासस्तु ते भवतीत्येव मन्ये, यथा मेऽस्ति । नो चेत्, मम प्रपञ्चस्य ज्ञानमेव मिथ्या इति वदेयम् ।

**संजीवशिवः** - तव तावदस्तीति साधु, परं ममापि सच अभ्यासोऽस्तीति त्वया कथमभिमतम् ।

**मदनतिलकः** - तवापि ममेव कर्णौ, मुखं च पृथु वर्तते इत्येव ।

**संजीवशिवः** - भवतु नाम किं जातमिदानीम् ।

**मदनतिलकः** - कस्य विषये पैशुन्यं प्रारभामहे ।

**संजीवशिवः** - हन्त! उक्तं किल, मम तावदभ्यासो नास्तीति!

**मदनतिलकः** - परं सत्यं ब्रवीमि, भ्रातः अत्र तावदेकवारं पैशुन्यं श्रुणु, तदनन्तरं त्वमेव ज्ञास्यसि यत् सः तवापि सहजो गुणः इति । पैशुन्यकथनश्रवणयोः पुरुषद्वयं यदा एकत्र

मिलति कियद् वा सृजनशीलौ भवत इति जानासि किं त्वम् ।

**संजीवशिवः** – मया तावत् तवोपदेशः नापेक्षितः

**मदनतिलकः** – अहमपि नैवदास्यामि तात ! परं श्रूयते चेत् नैव मन्तुः एतावानेव । यदीच्छसि चेत् श्रुणु, नेच्छसि चेत् कर्णौ पिधाय तिष्ठ, तदाच मया चोक्तं पैशुन्यवचनं मां प्रत्येव निवर्तितं भवति ।

**संजीवशिवः** – त्वया अवश्यमेव पैशुन्यं वक्तव्यमेव किम् ?

**मदनतिलकः** – उक्तचरं किल तात! तत्तु अतीव दुष्टं व्यसनमस्ति, कस्य विषये प्रारभामहे ।

**संजीवशिवः** – भवतु तथा चेत् देवमधिकृत्य पैशुन्यवचनं वद शृणुमः।

**मदनतिलकः** – सुकृतिनं ग्राहकमेव गृहीत्वा ददौ । यदा च अस्माकं नाडीस्फुरणं वीक्षते स्म, भवान् तथा मारः कया अपि अदृश्यदेवतया सह नयनाभ्यामेव संभाषमाणः इव आस्ताम् किल! का सा?

**संजीवशिवः** – तद्विषये मारमेव पृच्छतु भवान् ।

**मदनतिलकः** – कियान् मुग्धोऽसि त्वम् भ्रातः, त्वां दृष्ट्वा उदरपूर्णः सन्तोषो जायते, पश्य । मम तावत् तव पितुः कीर्तिशिवस्यापि परिचय आसीत् ?

**संजीवशिवः** – एवं वा, को भवान्

**मदनतिलकः** – राजगृहस्य विदूषकः, तव पितुः मित्रमहम् । उभावपि सहितावेव नाटकं कुर्वःस्म। स तु सर्वदा नायकस्य वेषमेव धृत्वा करोति स्मेति सुलभमेव मृत्युहस्ते पतितः। अहं तु प्रतिदिनमेव नामधेयं परावर्त्य, यत् किमपि वेषं धरन् आसे, अत एव मृत्योः मम प्रत्यभिज्ञा एव न जाता । यदि चेदानीं तव पिता अजीविष्यत्

तदा मत्सदृश एव अभविष्यत, आहोस्वित्, इतोऽपि साधुतर एव स्यात्। किमिति चेत् स तु चरमक्षणपर्यन्तं केवलं तव मातरि एव प्रीतियोगं कृतवान् । परं अहं तु एतावत्पर्यन्तं एकस्य वेषस्य पर्याये एकां महिलां ऊढवानिति, एवमस्मि । व्यूढाः दारा एव अष्टौजनाः। सर्वेऽपि अष्टौ दाराः निधनमुपगताः । कानिचित् दिनानि दुर्दैवेन साकं अवसमहम् । अनया च उरसः पीडया आसक्तिस्तावन्निरुद्धा एवासीत्, अत एव यातयामेऽस्मिन् शयने पतित्वा तीव्रवेदनायाः अनुभवापेक्षया, उत्थाय, अपरस्याः वध्वः गवेषणं दर्शनं वा वरमित्येव उत्थितवान् । एका वधूः लब्धा एव । रोगनिवारणानन्तरमेव भवतु इति इदानीमपि कातरोऽस्मि । तस्याः नाम मदरङ्गीति भवानपि, उदारं मनः कृत्वा, तव पितुः मित्रभावं गणयित्वा, यौवनरसस्य अभिवृद्ध्यर्थं भेषजं ददाति चेत् .......

**संजीवशिवः** – ददामि पितामह, मम मातापित्रोः विषये परिचयोऽस्तीति उक्तं किल, प्रथमं तदेव वद ।

**मदनतिलकः** – त्वया च दीयमानं यौवनाभिवृद्धिकरमौषधं मयि यत् परिणामं रचयति वा नवेति तत् निश्चितं कृत्वा सर्वं सविवरं कथयामि, भवति किल ।

**संजीवशिवः** – अग्निस्त्वं वृद्धः । भवतु नाम, तव विषयेऽपि किञ्चिदधिकं आवेदय ।

**मदनतिलकः** – प्रतिवाक्ये वृद्धः वृद्धः इति यद्वदसि तत् जहासि चेदहं वदामि । मम तावत् वधूः मदरङ्गीति, मदरङ्गी मदीयो धर्मः । मदरङ्गी देशः, मदरङ्गी कालः । तस्याः कृते अहमेकं व्याकरणं विरचितवान् यच्च

तत् आस्थानवैय्याकरणानां मत्सरस्य पात्रं जातम्। उदाहरणार्थं विभक्तिप्रत्ययप्रकरणं तावदेवमस्ति । मम वध्वः नाम मदरङ्गी इति प्रथमाविभक्तिः, अहं मदरङ्गीं प्रीतियोगेन प्रीणयामि इति द्वितीया, अहंतु मदरङ्ग्या जीवितोऽस्मि, मम प्रीतियोगः मदरङ्ग्यै प्रदत्तः इति चतुर्थी, अहमिदानी मदरंग्याः वियुक्तोऽस्मि इति पञ्चमी । अहं तु मदरंग्याः भक्तः इति षष्ठी । मम चित्तवृत्तिस्तु मदरंग्यां अस्तीति सप्तमी । हे मदरंगि मां रक्ष इति संबोधनम्, कथमस्ति?

**संजीवशिवः** - हन्त, कामस्तु स्वकान् सर्वानपि बाणान् तवोपरि एव मुक्तवान् इतीव वदसि, वृद्ध!

**मदनतिलकः** - पुनश्च वृद्ध इति जल्पसि महाभाग, मदरङ्गी एव मां युवेति आकरयति!

**संजीवशिवः** - सा महिला त्वां किं वदति ?

**मदनतिलकः** - महिला इति मा जल्प, आर्य, सा अप्सरास्त्री अप्सरास्त्री तां दृष्ट्वा मम अष्टौ दारान् कियत्या निकृष्टभावनया तादृशतिरस्कारेण, कियद्वा असह्यभावेन पश्यामि इति चेत्- हन्त! तादृशजीर्णोलूकीभिः जीवनं यापितमिति मदीये मुखे मयैव निष्ठीवनं क्रियते यदा यदा स्मरणपथमानीयते, जानासि कि?

**संजीवशिवः** - (हसन्) दारविषये एतावान् निकृष्टभावः .... !

**मदनतिलकः** - वैद्यमहाशय, दाराणां विषयः ब्रह्मचारिणा त्वया कथं जाज्ञायते । तासां (भार्याणां) कपटभावः, तासां नाटकं, तासां वञ्चनकर्म, तासां पिशुनवचनानि एकस्मिन् एव वाक्ये तासां विषयं वदमि किं बाल?

आहत्य, तासां दुष्टभावः, तासां नीचतरविचाराः तासां स्वार्थपरता, तासां निर्दयत्वं तासां चाञ्चल्यं, तासां अनृतत्वं, अश्रुप्रदर्शनं, मिथ्यावलेपः, तासां, वाचालत्वं ... तासां ....

**संजीवशिवः** – सर्वमेतत् मदरङ्गी एव पाठितवती किम् ?

**मदनतिलकः** – छे छे, बाल, तस्याः विषयः त्वया नैव ज्ञायते । वदामि किं महोदय, चलन्तीं, एकां मृदुलतरां वल्लीं मनसि कल्पय, नवाङ्कुरालंकृता, विलासेन सरन्ती, कोमलतरा लता इत्यवधारय ! तस्याः लतायाः उपरि एकं रक्तकमलं विकसितमस्ति किल! तस्मिन् शोणितकमले नीलकमले द्वे विकसिते किलार्य!

**संजीवशिवः** – स्वामिन् (आर्य) प्रथममिथ्या तावत्, वल्ली तु नैव चलति, द्वितीयमिथ्या तावत्, तादृशलतायां कमलं नोद्भवति, उद्भवत्यपि तस्मिन् कमले, पुनश्च द्वे नीलकमले, छे छे, ...........

**मदनतिलकः** – कल्पय बाल, तन्नाम ........

**संजीवशिवः** – आर्य, त्वदुक्त महिलां कल्पयामि चेत् भयमुपचीयते।

**मदनतिलकः** – छे, वैद्याःएतावदरसिकाः! तथा न बाल, चलन्ती वल्ली नाम मदरङ्ग्याः देहः, लता इव वर्तते इत्यर्थः। लोहितकमलं नाम तस्याः वदनं विकसितं रोहित कमलमिवास्ते इति, तस्मिन् नीलकमलद्वयं नाम द्वे नयने इत्यर्थः, ज्ञातं वा महाभाग!

**संजीवशिवः** – तथापि भयं नान्तरीयकं, आर्य! इतः पश्य तव तावदौषधं सिद्धं जातम् । नवदिनेषु प्रतिदिनं त्रिकालं औषधमुपसेव्य तदनु मदरङ्गीसकाशमुपयाहि

**मदनतिलकः** – तन्नाम यौवनरसस्यौषधं ........ ?

**संजीवशिवः** – तस्मिन्नेवास्ते । संप्रति वा भवतु मम पितुः विषये वक्तुमर्हति किल ।

**मदनतिलकः** – परं प्रश्नान्तरस्य उत्तरं नैव दत्त्ववान् किल!

**संजीवशिवः** – कोवा सः ?

**मदनतिलकः** – भवान् एकवारमौषधं ददाति चेत् अलं, निरामयेन भवितव्यमेव, इति विश्वासस्तु वर्तते किल । सच स्थविरो मारः मातुश्च कृपा जाता इति तवौषधं विहाय गतवान्, किमर्थं ?

**संजीवशिवः** – (अवमानितःसन्ः) प्रश्नस्यास्य उत्तरं तावत् त्वया मारादेव अवाप्तव्यम् ।

**मदनतिलकः** – एवं वदसि वा! तथा चेदस्य प्रश्नस्यापि उत्तरं देहि । राजगृहात् चतुर्वारं आह्वानमागतं त्वं नागतवान्, किमर्थम् ?

**संजीवशिवः** – राजगृहात् एतावत् पर्यन्तं न किमप्याह्वानं आगतम्। भवान् आस्थानविदूषकोऽस्ति इति भवत्कृते आह्वानं प्रेषितं भवेत् । तस्मात् भवान् तत्र गन्ता नाहम् ।

**मदनतिलकः** – तथा चेत् लघुतरा विज्ञाप्तिर्मे तावदस्ति, आर्य, निवेदयामि किम् ।

**संजीवशिवः** – कथय–

**मदनतिलकः** – राजकुमारी तावत् अस्माभिरज्ञातेन केनचित् रोगेण म्रियमाणा अस्ति । यदि भवानागत्य औषधं दास्यति, तदा पुनरुज्जीविता भवतीत्यनूनकं राज्यं विश्वसिति। उदारमनोभावं धृत्वा आगमिष्यति वा वैद्या महाशय!

**संजीवशिवः** – एवं किं, मह्यं तावत् पूर्वमेव किमिति नोक्तं पश्य, आगत एव ।

(स्वीयं वैद्यकीपिटकं गृहीत्वा निर्गमनान्तराले गिरिमल्लिकायाः प्रवेशः)

**गिरिमल्लिकाः**–पुत्र संजीव, तव माता त्वां आकरयति ।

**संजीवशिवः** – (मदनतिलकं प्रति), तिष्ठ एतदन्तरे एव आगमिष्यामि।
(गिरिमल्लिका तथा संजीवशिवः अन्तः गच्छतः, किञ्चित्समयानन्तरं गिरिमल्लिका बहिरागच्छति ।)

**गिरिमल्लिकाः**–वैद्यस्तु आगन्तुं नैवशक्यत इत्युक्तवान्, भवानिदानीं गन्तुमर्हति ।

(मदनतिलकः प्रस्थितः)

## सेडुमारी (घातमारी)

(राजगृहस्य एकस्मिन् कोणे अस्वस्था राजकुमारी । अपरस्मिन् स्थाने राजा, मन्त्री च चिन्तामग्नौ, अत्रान्तरे घातमारी तत्रागच्छति।)

**घातमारी** – किमिदमाश्चर्यम् ?
बहिः दहनो नैव ज्वलितः, शवखट्वापि नैव बद्धा! आभ्यन्तरगृहे, न कोऽपि रोदिति! राजपुत्री इदानीमपि नैवमृता वा! एतावता एवात्र रुदतां जनानां सम्मर्दः संभूतःस्यादिति, रोदनशीलैश्च कविभिः विरचिताश्चर–मगीताः गानकलाविदाः वनिताः गायन्त्यश्च स्युः इति चिन्तितमासीत्, परं अत्र पश्यामि चेत् किमपि नाभूत्! पृष्ट्वा अवगच्छमीति चेत्, इतस्ततः पश्चादग्रे भूतपिशाचादयोऽपि नैव दृश्यन्ते ! अहो ! तत्र पुष्पगन्धा समागता, तामेव पृच्छामि ।
(राजसुतायाः चेटी पुष्पगन्धा आयाति)
कथमस्ति सहोदरी! तथा किमिति मां वीक्षसे, मम प्रत्यभिज्ञा नैव लब्धा वा? ह्यः, अत्रैव अहं त्वं च

नैव मिलिते वा?

**पुष्पगन्धा** – अहं तु त्वां कदापि कुत्रापि नैव दृष्टवती खलु? का त्वम्?

**घातमारी** – मृता किल महाराज्ञी, तस्याः सखी अहम्। राजसुतया अद्य मर्तव्यमासीत् किल।

**पुष्पगन्धा** – राजकुमार्याः निधनं वञ्छन्ती एकापि मिलिता खलु! नमस्ते!

मातः त्वं कासीति नैव जानेऽहम्।

वयं तु यद्विषयं चौर्येण वक्तुमपि बिभीमः तमेव उच्चैः स्वरेण असकृदेव उक्तवती खलु। तवधैर्यं तावत् प्रशस्यमेव। परं, तेन च तव किमपि प्रयोजनं भवितव्यमस्ति किम् मातः?

**घातमारी** – इदं किमपि प्रतीपमस्ति किम्? सा मरिष्यतीति सहानुभूतिं (समाधानं वा) वक्तुम् आगता चेत् मामेव उपालभसे।

**पुष्पगन्धा** – सत्यं, एकवारं निधनमागत्य जीवितं विच्छिद्य महापूरेण नेनीयते चेदपि ऋजुकमेव, निश्चितं यदागमनं वर्तते निधनस्य तस्य प्रतिपालनं यदस्ति तादृशो नरकस्तु नान्योऽस्ति। राजसुतायै वयं केऽपि तस्याः मृत्योःप्रवृत्तिं नैवोक्तवत्यः परं सातु अस्माकं संभाषणानां चौर्यश्रवणेन विषयमवगतवती। विषयं विदित्वापि अविदिता इव सा यदभिनयं करोति तद्दृष्ट्वा अन्तःकरणं निष्पीडितं भवति।

**घातमारी** – अहो अहो नूपुरनादः श्रुतः किम् आयाता पश्यतु आयाता संभूषित–नूतनवधूः

सा नवसीरिकां च परिधार्य

लेपितगन्धा, कुङ्कुमतिलकं धृत्वा .........

**पुष्पगन्धा** – केयं अनिष्टमुण्डिका, इतश्च बहिर्गच्छति वा न वा? आहोस्वित् नोदयितव्या । कोऽवा तत्र?

**घातमारी** – विवाहे जनाः नापेक्ष्यन्ते, किं रे! आमन्त्रणं निमन्त्रणं विनैव समागताहं, मामेव याहीति वदसि रे!

(सेवकः आगच्छति)

**पुष्पगन्धा** – कन्धरे करं कृत्वा बहिः नुद एतां, (सेवकः तथा कर्तुं यदा प्रवृत्तः घातमारी धावति। घातमारी यथा वर्णितवती तथैव समलंकृता राजकुमारी आयाति, सा खल शुष्कवदना रोगिणी)

**पुष्पगन्धा** – ज्वरो व्यपगतः कि राजसुते?

**राजकुमारी** – स तु निधनपर्यन्तं नैव मुञ्चति माम्

**पुष्पगन्धा** – नूतना सीरिका ..........

**राजकुमारी** – रात्रौ भयानकमेकं स्वप्नं दृष्टवती, पुष्पगन्धे प्रतनसीरिकां धृत्वा विवाहार्थं समलंकृता आसम् राजगृहं, गुरुगृहं, अनूनकं नगरमेव मङ्गल-पत्रतोरणादिभिः समलङ्कृतान्यासन् । गुरवः, ज्येष्ठाः कनिष्ठाः तातः, त्वमपि प्रत्नवेषैः स तु कश्चित् पटच्चरवेषधारी, भिक्षुकः सखि! तदर्थमेव स्वप्नस्य प्रतीकारार्थं नवसीरिकां धृतवती ।

**पुष्पगन्धा** – (ससन्तोषम्) राजकुमारि, अयं तु शुभकरः स्वप्नः।

**राजकुमारी** – सर्वे किमर्थं अनृतं वदन्ति ? सर्वेभ्यः किमभवत्? मरणदिने वा चरमे सत्यं नोक्तव्यं किम्। अद्य तावत् मम विवाहः, तथा निधनमस्तीति ज्योतिर्विदः यदुक्तवन्तः, तत् सत्यं किल! कृपया अनृतं नैव वदतु, शपे मह्यम् ।

**पुष्पगन्धा** – सत्यम्

**राजकुमारी** – तथा चेत् चरमेऽस्मिन् दिने अहं तु मम मातुः चित्रस्य पुरतः उपविश्यः एकाकिनी एव प्रार्थनां कर्तुं मे अवकाशं दास्यसि किल, अम्बे !

**पुष्पगन्धा** – परं महाराजः .......

**राजकुमारी** – जानामि, महाभागे,
''मां विहाय किञ्चिदपि दूरं नैव गन्तव्यं इति महाराजस्य आज्ञा वर्तते । अस्ति किल, प्रकोष्ठात् बहिः तिष्ठ । यावताहं नाकारयामि तावता नयनपथे मा पत
(पुष्पगन्धा तिरोहिता भवति, अन्यत्र, राजकुमारी निभृता भवति, रङ्गस्थलस्यैकदेशे चिन्ताक्रान्तो राजा मन्त्रीच)

**राज** – मन्त्रिमहोदय! वैद्यः संजीवशिवः नैव आगतः खलु?

**मन्त्री** – राजवैद्याः सर्वे अत्रैव स्थित्वा प्रतिक्षणमेव राजकुमारीं परिवेक्षमाणाः सन्ति, प्रभो! राजसुतायाः अनिष्टनिवारणार्थं तथा अयुरभिवृद्ध्यर्थं राज्ये सर्वेष्वपि देवकुलेषु प्रतिदिनं त्रिकालं पूजा, पुरस्कारश्च प्रचलति। ऋषयो मुनयश्च स्वीयेषु आश्रमेषु मृत्युञ्जयजपादिकं, होमहवनादिकमपि कुर्वन्तः सन्ति । प्रभो, राजसुतायाः कृते ये प्रार्थयमानाः सन्ति तेषां च न कापि न्यूनता यथा न भवति तथा वयं अवेक्षमाणाः स्मः ।

**राजा** – नूनमहं पृच्छमि, वैद्यस्य संजीवशिवस्य विषयं

**मन्त्री** – यदि महाप्रभुः क्षमां करोति चेदहं वदामि । प्रभो, आग्रहेण तं समुद्धृत्य आनेतुं यद्यपि गताः तथापि रिक्तहस्ता एव समायाताः

**राजा** – वयमेव तत्रगत्वा आयास्यामः ।

**मन्त्री** – चतुर्वारं जनान् तत्र नुदितवान् प्रभो! यदा यदा गताः तदा सः तत्र नासीत्, अन्वेषितोऽपि नैव लभ्यते सः। कुत्र गतः सः इत्युक्तौ काननमिति वदन्ति । तत्र गत्वा ये निवृत्ताः मायया समाक्रान्ता इव भीतभीताः अस्माकं दृष्टिचौर्येण (दृष्टिपथं विहाय) भ्रमन्तः सन्ति। पुरतः समागताश्चेत् उन्मत्ता इव हस्तसंज्ञया नेत्रसंज्ञया भाषन्ते यदस्माभिर्नैव ज्ञायते ।२

गतेषु तेषु एक एव वरः योऽसौ तेन सह संभाषणं कृत्वा समागतः स तु विदूषकस्त्वेक एव । प्रभो स तु तत्रभवतां भवतां दर्शनार्थ प्रतिपालयन्नास्ते, आकारयामि किम् ?

**राजा** – शीघ्रमेव आकारय ।

(मन्त्री सेवकाय सज्ञां ददाति, विदूषकः समायाति)

**मन्त्री** – कथय विदूषक, वैद्यः संजीवशिवः कुत्र? राजसुतायाः विषयप्रस्तावे कृते किमवदत् सः?

**मदनतिलकः** – प्रभो, सचैको विचित्र एवानुभवः । तस्य माता तावत् साक्षात् शटवीदेवी, मृत्योः अधिदेवता!

**राजा** – एवं किम् ?

**मदनतिलकः** – प्रभो, अत्र न कोऽपि सन्देहस्पन्दः ।

सर्वं विषयमवगत्यैव समागतोऽहम् ।

मातरं विना तस्य वैद्यकीयं नास्ति ।

मम तथा मारस्य विषयं माता तावदाशीर्वादं कृतवतीत्येव मारः प्रोक्तवान् । तस्मादेव औषधं

---

२. अज्ञातभाषया संभाषन्ते

मर्दयित्वा दत्तवान् । आगमन समये, देवस्य सन्देशं तथा राजकुमार्याः रोगस्य विषयं प्रस्तुतवान् । आश्चर्यास्पदं तावत् अयमेकोऽपि विषयः नैव ज्ञात आसीत् । पूर्वमेव किमर्थं नोक्तमिति कोपः कृतः । कुलीनो वैद्य इव तत्क्षणमेव मया सह प्रस्थातुं प्रवृत्तः, अत्रान्तरे, तस्य माता तमाकारयतीति, कृषिकचेटी समागत्य न्यवेदयत् । अगत एव इत्युक्त्वा अन्तर्गतः सः तदनु तयैव चेटिकया– 'आगन्तुं नैव शक्यते' इति सन्देशवचनं प्रेषितवान् । तस्य प्रसूः कुत्रासीत्? इत्ययं तु नैव मे दृष्टिगोचरोऽभूत् । अन्तः दृष्टिं प्रेष्य पश्यामि, गाढान्धकारः । केनापि वस्तु योग्यं स्थलं नासीत् तत्र । परं आगमनकाले बृहद्गात्रो भयोत्पादकः कश्चित् गरुडपक्षी खल्वेकः उड्डीयागत्य अस्माकं राजगृहस्योपरि उपविष्टः । स तु खगान्तरवत् नासीत्। प्रभो, वयं तावत् तादृशविहंगमं पूर्वं न कदापि दृष्टवन्तः पक्षौ कीदृशौ, कन्धरः चञ्चुः कथं, तस्य स्फुरती नयने कथं! उड्डीय यदात्र आगतः सः प्रभो! तदा तस्य पक्षौ, उभयदिगन्तयोः लगिताविति दृष्टं मया । तस्माच्च झटित्येव पादोत्क्षेपेन धावमानः समागतः । प्रभो भवन्तःक्षमापयन्ति चेत् वचनमेकं भणितुमिच्छामि ........

**राजा** – कथय,

**मदनतिलकः** – प्रभो वैद्याय भवतां निरोपं सा नैव प्रापितवती, सच अत्र यथा नागमिष्यति तथा निवारितवती सा नाम तस्य जनयित्री । प्रभो– तावता च तस्य आशां

विहायावस्थानं भद्रमिति ममाभिप्रायः तथापि भवन्तः वदन्ति चेत् .....

राजा – चरमप्रयत्नं कृत्वैव जिहासामहे, अगच्छथ ।

पुष्पगन्धा – (धावन्ती आगत्य) प्रभो राजकुमारी, न कुत्रापि दृश्यते, यत्र कुत्रापि अन्वेषितापि नैव लब्धा ।

राजा – कः कोऽत्र भोः, शीघ्रं राजकुमारीं अन्वेषयत, (सर्वे संभ्रान्ताः राजकुमारीं अन्वेष्टुं यान्ति)

## मायामहीध्रः

(स्थूलोपलः तस्य मूले गुहा, मूलिकाभिः तथा हरिणपोतेन सह संजीवशिवः प्रविशति, यावता च स्थूलपाषाणं साश्चार्यं पश्यन् आस्ते तदा मारः प्रविशति)

**मारः** – स्वामिन् नमांसि,

**संजीवशिवः** – नमस्ते, त्वमेकवारं मम वैद्यशालां आगत आसीः किल

**मारः** – अथकिम् महोदय, अहं मारः, भवन्तं विलोक्य एव आगतोऽहम् ।

**संजीवशिवः** – तदेव भावितं मया, कथमसि, मार?

**मारः** – एवमस्मि, स्वामिन् ।

**संजीवशिवः** – अद्रिमायास्थूलोपलः इति वदन्ति किल, अयमेव किं मार?

**मारः** – अथकिम् महोदय ।

**संजीवशिवः** – भयङ्करोऽयं स्थूलोपलः अयं गण्डशैलः, तस्य मूले गह्वरं, दूरतस्तु, प्रदेशमिमं गिलितुं मुखं व्यादाय स्थितः कोऽपि वन्यमृगः इव भासते, महाशय! मार अन्तः किमस्ति ?

**मारः** – स्वामिन् कृपया केवलं तद्विषयमेकं तावत् नैव पृच्छतु। गह्वरे किमस्तीति न केनापि ज्ञायते । अयमेकस्तु कालगर्तः, अन्तः न केऽपि प्रविष्टाः, प्रविष्टाश्च बहिरागता इति न, जनो वा मृगो वा भवतु, अन्तः प्रविष्टः प्रकाशो वा ध्वनिरपि बहिर्नायाति । परं सर्व पदार्थान् प्राणिनश्च कल्मषराशिं कृत्वा उपरिसरन् दुर्गन्धः तत्र सर्वत्र पूरितः, तस्य समीपमपि वा सरति चेदपि, अलं, नासिकायां पीडाकरं यथा भवति तथा

कटुतरं प्रहरति । अमावास्यायां तु निशायां तावत् गुहायाः रौद्रगर्जनादिकं तु वक्तुं न शक्यते । आकशस्तु क्षोभितो वृक्षाणां मूलोत्पाटनेन पातनस्य भयंकरः प्रभञ्जनो वाति ! वयति च वाते, पिपीलिकां आरभ्य मतङ्गजपर्यन्तं सर्वोऽपि जीवराशिः प्रक्षोभितः सन् गुहायाः वक्रगर्ते अहमहमिकया सवेगं धावन् इव भाति । शवबन्धनानि लपनानि व्यादाय शताधिकाश्च तिमितकुणपाः समुत्थाय मुखानि व्यादाय क्रूरं क्रन्दन्तः साक्षात् गुहायामेव धावन्ति । एकवारं तु तुषार वृष्टिरिति भावितं परं यदा पश्यामि, शरीरोपरि सर्वत्र शोणितस्य शीकर एव सिक्तः!

**संजीवशिवः** – सर्वमिदं ते स्वानुभवो वा श्रुतिपथमागतम् ?

**मारः** – स्वयं नयनाभ्यां दृष्टं यत् तदेवोक्तम् स्वामिन् !

**संजीवशिवः** – इतः पूर्वं कस्मिन्नपि दिने मातुः दर्शनं जातमासीद् वा ते?

**मारः** – अथकिम् । तदाहं तु बाल आसम् ।

शवगर्तखननं मम कुलव्रतम् । परं मम जनयित्र्यै शवगर्तखननस्य कार्यं नाम भयजनकम् । गर्तस्मशानं प्रति गन्तुं नैव मुञ्चन्ति स्म माम् । कुलव्रतमित्युक्तौ यः कोऽपि मृतश्चेत् तूर्ष्णीं स्थातुं शक्यते किम् ? अम्बायाः दृष्टिचौर्यं कृत्वा खनामि स्म । एवमेव विवाहं कृतवान् । पुत्री जाता । जाया मृतवती इति गृहं प्रति ध्यानं न्यूनमभवत् ।

एकस्मिन् दिने सायंकाले अत्रैव शववितर्दिमवलम्ब्य श्रान्तः तन्द्रितः । कदापि निद्रां गतः । अम्बा आगत्य–'मारा' इति आकारितवती, जाग्रतः यदा

पश्यामि तावता मध्यरात्रिरेव जाता! गृहादिकं विस्मृत्य एवं क्रियते चेत् कथं, इति कोपं कृतवती । 'यदा निद्रा आगता इति नैव ज्ञातं' इति म्लिष्टवचनैः तया सह गतः । अम्बा तु तदनु अन्नार्थं शाकरसं परिवेषितवती पश्य, इतस्ततः अपश्यन्, गबगबेति उदरपूरं खादितवान् । अनन्तरं पश्यामि, समग्रस्य शिवपुरस्य जनाः यस्याःश्रवणात् भयभीताः गडगडेति कम्पन्ते सा एव अद्रिगुहा, तस्यामेवास्मि इति । भयोत्पादकं किमपि नासीत् तत्र । अम्बे किमर्थं पौरजनाः एवं भयभीता भवन्ति अस्याः गुहायाः इत्युक्तवान् । अम्बा तावत् केवलं मन्दं हसितवती ।
'सुता' कथं वर्तते' इत्यवदत् ।
'सुष्ठु वर्तते अम्बे'-इत्यभणम् ।
'श्वः समानय' - इत्यकथयत् ।
'भवतु अम्बे' इत्युक्तवान् । निवृत्तः च ।
गह्वरात् यदा बहिरागतः तत्क्षणमेव स्मृतं, पश्य यत् मम जनयित्री तावत् मृतिमवाप्य वत्सरा एव व्यतीताः इति । उटजमागत्य सर्वं स्मृतवान् । अम्बा तावत् सीरिकायां शून्या आसीत् । का वा स्यात् इत्यवदम् सा खलु मम जनयित्री अम्बा नैवास्ति
भयभीतस्य मे तनुः सजलं स्वेदमभजत् स्थितं च भूतलं स्तिमितमभवत् ।
प्रातरुत्थाय सुतां अबोधयम्,
सातु मातुः चरणमाप्तवती
तद्दिनात् स्वप्ने समागता का वा आसीदिति संशयः आसीदेव ।

ह्यः तव वैद्यशालायां या प्रत्यक्षा अभवत् अहो, सैव शटवीताई (निधनदेवी) या तस्मिन्दिने आगतेति निश्चितम् ।

**संजीवशिवः** – इदानीं स्मृतिपथमागतं, अहं तु त्वामेव पृच्छामीति चिन्तितवान् आसम् । मार, तस्मिन् दिने मातुः आज्ञा जाता, किमपि वल्कं वा मूलं क्वाथयित्वा पिबामि, किल, इत्युक्त्वा, औषधं अगृहीत्वा गतः, कोऽस्य अर्थः ? मातुः कृपानन्तरं ममौषधस्यावश्यकता नास्तीति वा ।

**मारः** – स्वामिन्, भवन्तस्तु महावैद्याः । सा च महामाया वैद्यानां परमदेवता, तस्याः मातुःकृपायाः आवश्यकता अस्तीत्येव किल भवन्तः मातुरागमनार्थं प्रतिपालयन्तः आसन् । अत्र भवतां वृत्तेः उपरितनस्तरः न्यूनीकृतः इति न! अस्ति किल । तथाच, तस्मिन् दिने माता तं शिशुं वामेन स्थित्वा कृपां नैव कृतवतीति मे खेदो जात इति तु सत्यमेव ।

**संजीवशिवः** – तन्नाम, मातुः कृपा यदा भवति तदाहं उनुचितमपि भेषजं ददामि चेदपि रोगो निवारितो भवतीत्यर्थो भवति किल

**मारः** – परं तादृशं भेषजं भवान् नैव दातुमर्हति ।

**संजीवशिवः** – किमर्थम् ।

**मारः** – किमिति चेत् भवान् महामायायाः पुत्रः । अहो, राजगृहस्य तूर्यरवः श्रुत इवाभवत् पुनरागच्छमि स्वामिन्।

(गच्छति सः ''साधु वदतु शुभं वदतु, मंगलं च शुभं अम्बे स्वर्णसुते, राजकुमारी! शृङ्गारसंपदं शुभं भणतु''

इति गीतं श्रूयते, संजीवशिवः तत् प्रति पश्यति गह्वर – सकाशात् एका वृद्धा आयाति ।)

**संजीवशिवः** – अरे, (अहो) गह्वरान्तरङ्गादेव इयं स्थविरा अगच्छन्ती वर्तते । हे अज्जिके! गह्वरान्तात् आगता वा ?

**स्थविरा** – अथकिम्, न दृश्यते किम् ?

**संजीवशिवः** – इमां गुहां ये प्रविशन्ति बहिर्नागच्छन्तीति वदन्ति ।

**स्थविरा** – अथकिम् ।

**सदाशिवः** – परं त्वं खलु आगतवती किल!

**स्थविरा** – चिन्ता मास्तु, अहं तु स्थविरा ।
मां तु मृत्युरपि नैव स्पृशति, । परं
त्वत्सदृशाः अन्तः नैव गच्छन्ति तात ।

**संजीवशिवः** – अन्तः किमस्ति, अज्जिके?

**स्थविरा** – न केऽपि सन्ति ते ये तद्दृष्टवन्तः । एवं भवेदिति प्रत्येकोऽपि एकैकरूपं वदति । सा तु अपरिहार्या प्रहेलिकेति भणन्ति ।
सर्वेषां प्रकाशानां, सर्वेषां अन्धःकाराणां च लक्ष्यमित्याहुः । मया तु तत्सर्वं नैव ज्ञायते भोः त्वं तु शिवापुरपल्लीस्थितायाः मृत्युदेवतायाः पुत्रः किल

**संजीवशिवः** – अथकिम् ।

**स्थविरा** – त्वं किमर्थमत्र आगतवान्

**संजीवशिवः** – तरुमूलादिकं अन्विषन् आगतः । त्वं किमर्थं अन्तर्गता

**स्थविरा** – तव यत्नष्टं भवति तदन्वेष्टुं ।

**संजीवशिवः** – मम तावन्नेदानीमपि किमपि नष्टम् किल ।

**स्थविरा** – तत्तु शनैः विज्ञायते । यदा त्वं जानासि तदा अन्विष्यते चेदपि यत् नैव लभ्यते, तदेव संप्रति एवं अन्वेषयन्नसि। अहो, तत्र नववधूः समागता ।

त्वं केवलं स्वीयामेव खेलां खेल, तस्याः क्रीडामपि त्वमेव नैव क्रीड ।

(सा गच्छति, तस्याः वाक्यार्थः नैव ज्ञात इति यदा भ्रमपरवशो वर्तमानः तदैव, राजकुमारी त्वरया आकृष्टा इव गुहामेव लक्ष्यंकृत्वा गच्छन्ती आस्ते । संजीवशिवः धावन्

**संजीवशिवः** – अरे रे बालिके, तिष्ठ तां प्रति नैव याहि, तिष्ठ इति वदामि ।

(सा तस्य वचनं अनादृत्य पुनश्च तां (गुहां) प्रति गच्छन्ती आस्ते । संप्रति संजीवशिवः तां मध्ये रुणद्धि ।)

किं भूतं ते? तं प्रदेशं प्रति मा गमः इत्युक्तावपि नैव श्रूयते किम्?

**राजकुमारी** – किमिति न गन्तव्यम् ?

**संजीवशिवः** – तत्तु अपायास्पदं स्थानम् । अन्तः ये गमिष्यन्ति ते बहिर्नागच्छन्ति इति तु इदानीमेव ज्ञातम् । त्वं तु अन्तः गन्तुं त्वरमाणा असि किल ।

**राजकुमारी** – अहन्तु बहिः नागन्तव्यमित्येव अन्तः गन्तुमिच्छमि।

**संजीवशिवः** – तन्नाम,

**राजकुमारी** – मर्तुम्, तन्नाम प्राणान् नाशयितुम् ।

**संजीवशिवः** – तादृशं किं जातं ते ।

**राजकुमारी** – इतोऽपि किं भवितव्यम् महाशय? (दृष्टिगोचरो नभवति किम्?) मुखं तावत् निस्तेजं जातम्, रदनच्छदौ तु शुष्कौ जातौ, नयनयोः प्रकाशो नास्ति, अस्थिपूरिता भस्त्रिका इव दृश्येऽहम्, नालं किम् । स्वामिन् अष्टोत्तरशतं रोगाः सन्ति मयि ।

पञ्चदशदिनानि जातानि प्रविष्टो ज्वरो नैव व्यपगतः। तदर्थमेव जीवनं निःसत्त्वं जातमिति मर्तुं याताऽहम्। यद्यहं मृता, तव कोऽपि आक्षेपो नास्ति किल । (पुनश्च प्रस्थिता, संजीवशिवः तां रोद्धुं हस्तं प्रसारयति यदा च लब्धं तस्याः प्रकोष्ठं गृहीत्वा समाकर्षति । सहसा तस्याः नाडी लभ्यते हस्ते स्फुरणं परीवीक्षितुं प्रवृत्तः, सा अपि सहकारं दास्यति, यदा च संभाषणं अग्रे प्रचलति, तदा रोगं अभिज्ञातुं प्रवृत्त इति तस्याः वचनेषु लक्ष्यं न्यूनं भवति)

**संजीवशिवः** – कोऽपि वैद्यो नैव मिलितः किम् ?

**राजकुमारी** – स तु कोऽपि संजीवशिवः वैद्य इति श्रूयते, कियद्वारं आहूतोऽपि नैव आगतः । जीवितव्यं तावत् मम फाले नैव लिखितम् । महान् वैद्यः इति तस्य गर्वो वर्तते । अवशिष्टैः वैद्यैः तावत् मम रोगमभिज्ञातुं नैव शक्तम् ।

**संजीवशिवः** – त्वं तावदत्र, एतं प्रदेशं प्रति आगतवतीति गृहजनैः ज्ञायते वा ।

**राजकुमारी** – यदि ज्ञायते चेत् कोऽपि मां मर्तुं मुञ्चति वा ! जननी यदि अजीविष्यत तदा स विषय एव अन्यः । तातः, सेवकाः रोदं रोदं ........ मया तावत् सर्वं तत् नापेक्ष्यते स्म। मर्तुमेव निश्चयः कृतः, आगता च ।

**संजीवशिवः** – साधु साधु !

**राजकुमारी** – अहं जानामि स्म यत् त्वं मां अभिनन्दसे इति । परं त्वं प्रसन्नो भवसीति अहं नैवेदानीं म्रिये ।

**सदाशिवः** – तर्हि किमर्थं म्रियसे ।

**राजकुमारी** – आहो, हन्त, कति वा वारं कथ्यते । मम शरीरे

सर्वत्र पीडा, संकट एव । वैद्यानां औषधं नैव फलितं, एवं जीविते जुगुप्सा येषां ते जीवन्ति किम् ?

**संजीवशिवः** – अहं ते साहाय्यं करोमि वा ।

**राजकुमारी** – कस्यापि साहाय्यं नापेक्ष्यते । अहं तु क्षत्रियाणी राजसुता अहमेकाकिनी एव मर्तुं प्रभवामि ।

**संजीवशिवः** – त्वमेव राजकुमारी वा

**राजकुमारी** – इदानीमपि वा मर्तुं मां मुञ्चसि किल, महाशय ।

**संजीवशिवः** – एकाकिनी एव मर्तुं भयं न भवति किम् ।
(सहसा दृश्यस्य प्रारम्भे या स्थविरा दृष्टा सा पुनः दृष्टिपथमायाति ।)

**स्थविरा** – भयं किमर्थं, अहो, पश्य पुरतः अस्ति किल तस्यां गुहायां प्रविष्टा चेदलम्, तव यातना, संकटं भयं एकमपि नावशिष्यते, सर्वतश्च मुक्तिं लभसे ।

**राजकुमारी** – तावद्दूरपर्यन्तं चलितुं नैव पारयामि, अम्बे पश्य, उपानहः छिन्नः, कण्टकः विद्धः रक्तं च कथं वा प्रवहति पादात् । देहस्थं सर्वमपि शोणितं द्रवित्वा देहो रिक्तो भूत्वा शुष्को भूत्वा मृतापि चिन्ता नास्ति अहं तु नैव बिभेमि ।

**स्थविरा** – अहो तात इदमेवोच्यते क्षात्रतेजः इति

**राजकुमारी** – किमर्थं तथा हस्तं मर्दयसि ?

**संजीवशिवः** – रसनां दर्शय, पश्यामि,

**राजकुमारी** – (मुखं व्यदय जिह्वां प्रदर्शयन्ती) आ ........ त्वं वैद्योऽसि किम् ?

**संजीवशिवः** – अथकिम् । नयने विस्तारय ।
इदं पश्य, समाप्तं वा, त्वत्सदृशान् सहस्रशान् वैद्यान् जानाम्यहम् । गुहापर्यन्तं चलितुं नैवपारयामि; अत्रैव

मृतिप्रदं किमपिऔषधं वर्तते चेत् देहि ।
(संजीवः स्वीयपिटकात् औषधवल्लीं बहिरानयति, तस्याः कन्धरे बन्धनसमये सा स्थविरा आगत्य राजसुतायाः सव्यभागे तिष्ठति ।)

**स्थविरा** – राजकुमारि, तां कन्धरे नैव बन्धय, नैव ।

**संजीव** – (बध्वा) राजकुमारि! इमां वल्लीमेव कण्ठोद्बन्धः इति विभाव्य कण्ठे बद्धा वर्तते । इयं तु राजकुमार इव ते कण्ठग्रहणं करोति । प्रीतिं कुर्वतोः इव क्षणे क्षणे वेगेन दृढा भवति, श्वासनिर्गमनपर्यन्तं नैव मुञ्चति। अलं किम् ?

**स्थविरा** – रे संजीवशिव, तव माता कोपेन क्वथते । शीघ्रमेव गृहमागन्तव्यमिति ।

**संजीवशिवः** – भवतुनाम आगमिष्यामि ।

**राजकुमारी** – (ससन्तोषम्) त्वं किं वैद्यः संजीवशिवः ?

**संजीवशिवः** – अथ किम् ?

**राजकुमारी** – पूर्वमेव किमिति नोक्तम् ।

**सदाशिवः** – त्वं नैव पृष्टवती ।

**स्थविरा** – रे पुत्र, कथं वा वदामि ते ? एतदर्थ त्वया दण्डो देयः। स्मरेदम् ।

**राजकुमारी** – (संतोषातिशयेन) मां पुनरुज्जीवयितुं ते आयुर्वेदः सामर्थ्येन अभिवृद्धोऽस्ति वा वैद्यमहाशय ।

**संजीवशिवः** – तावन्मात्रं तु अभिवृद्धोऽस्ति ।

**राजकुमारी** – अहं तु सत्यमेव जीवन्ती वर्ते !

**संजीवशिवः** – यदि मम वचनं करिष्यसि

**राजकुमारी** – अहं जीविष्यामीति मया किमिति भावितम् ?

**संजीवशिवः** – किमितिचेत् त्वं तावत् बालिशा रोगिणीति

**राजकुमारी** – (सकोपं) पुनरेकवारं बालिशा इति भणसि चेदहं किं करोमीति जानासि किम् ?

**संजीवशिवः** – पुनरेकवारं त्वं बालिशा ।

**राजकुमारी** – त्वां-त्वां पश्यामि चेत् ........... अतीव सन्तोषो जायते ।

**संजीवशिवः** – वैद्यं पश्यामश्चेत् यममेव पश्यामः इव भवतीति जनाः भणन्ति ।

**राजकुमारी** – वैद्यान्तरं पश्यामि चेत् ममापि तथैव भवति!

**संजीवशिवः** – अधुना इदं मूलं जग्ध्वा गिलतात्, इदं पत्रं हस्ते मर्दयित्वा कपोलयोः, कन्धरे तथा उभयोर्हस्तयोः लेपयसि वा।

**राजकुमारी** – अहो अवश्यं । (तथा करोति)

**संजीवशिवः** – यदि त्वं क्षमापयसि चेत् एकं अधिकप्रसङ्गस्य वचनं वदमि वा ?

**राजकुमारी** – भण, तव वाचं श्रुत्वापि प्रमोदो भवति ।

**संजीवशिवः** – त्वं तु अतीवसुन्दरी । त्वत्सदृशीं सुन्दरीं एतावत् पर्यन्तं नैव दृष्टवानहम् ।

**स्थविरा** – संजीव, पश्य, अहं तु गता, इतःपरं त्वमसि तव दुर्दैवंच (इति गच्छति)

**राजकुमारी** – वैद्यमहाशय रोगोऽयं कीदृशं परिवर्तनमानीतवानिति न दृश्यते किम् ? प्रस्फुरतोः कपोलयोः उपरि शुष्करेखाः प्रकटिताः ये नयनसलिलानां कुल्याः इव सन्ति । भ्रुवौ तावत् अकालवार्धक्येनाक्रान्तौ वृद्धप्लवगस्य रूपं आनीतवन्तौ । तथापि त्वं मां सुन्दरीति भणसि । हास्यचेष्टायाः कृते नैव किल यदि त्वं पार्श्वे तिष्ठसि चेत् निरामया भवेयमिति भावयामि

। परं त्वं निर्गमिष्यसि चेत् इति भयमस्ति।

**संजीवशिवः** – यावत् पर्यन्तं त्वं गुणमुखी भवसि तवताहं त्वां विहाय नैव गमिष्यामि । (तस्याःस्वेदजलं मार्जयन्) अहो पश्य, तव वदनं अच्छं कान्त्या च स्फुरद् वर्तते । ज्वरो व्यपगतो वा नेति अवलोकय ।

**राजकुमारी** – (विलोक्य सानन्दम्) अथकिम् । सत्यमेव मम ज्वरः व्यपगतः संप्रति । भवान् तत्थ्यमेव मानवः किम् ?

**संजीवशिवः** – किमहं राक्षस इव दृश्ये ?

**राजकुमारी** – नहि नहि, भवान् कोऽपि देव एव स्यादिति ।

**संजीवशिवः** – देवो न मानुष एव । तस्मात् मां प्रति एकवचनेनैव भण। मानुष इत्येव अम्बा उक्तवती यत् त्वं (दण्डं) अनुभवसीति ।

**राजकुमारी** – अनुभूयते चेत् किं भवति ?

**संजीवशिवः** – लोकस्य स्त्रीपुरुषयोः यद्भवति तत्सर्वं भवति । सुखं दुःखं, लज्जा, जामिता, पश्चात्तापः ...... सर्वम्।

**राजकुमारी** – तत् सर्वं भवति चेत् कियत् सुन्दरं भवति किल। पश्य, नयने निमील्योन्मीलनान्तरे एव अनूनकमिदं भुवनं कियद्वा सुन्दरं दृश्यते । मम तावत् तावान् सन्तोषो जातः इति चेत् नृत्यामि इति भावना जायते ...... ।

(सा हर्षेण नृत्यन्ती आस्ते, राजा, मन्त्री, मदनतिलकः मारः, तथा सैनिकाः आगमिष्यन्ति।)

**सैनिकः** – अहो महाप्रभो, पश्यन्तु राजकुमारी अत्रास्ते । एष एव तां अपहृत्य समागतवान् । तं बधान !

**मारः** – प्रभो एष एव वैद्यःसंजीवशिवः ।

(राजकुमारी धावित्वा संजीवशिवं रक्षितुं इव तं पश्चात्

कृत्वा तिष्ठति)

**राजकुमारी** – तात, एष एव संजीववैद्यः! इतः पूर्वमेव मे भेषजं दत्तवान् । पश्य, इतः मम ज्वरो व्यपगतः ।

**राजा** – (सुतायाः ज्वरं परीक्ष्य) विश्वसितुं नैव शक्यते । परं मायातन्त्रं घटितमेवास्ति । सप्ताहद्वयादपि नैव व्यपगतो ज्वरः अवतीर्णः, राजकुमारी तावत् पुनर्जीवितास्ति। धन्यवादाः वैद्यमहाशय! तव सकाशे कियद्वारं सन्देशः प्रेषितोऽपि अनागतस्त्वं संप्रति त्वं तु स्वयमेव राजकुमार्या मिलितः, तस्यै भैषज्यं यद्दत्तं तत् मम वंशस्य भाग्यविशेष एव । तव कीर्तिः कर्णाभ्यां स्पष्टमेव श्रुता आसीत्, संप्रति स्वयं नयनाभ्यामेव दृष्टाऽस्ति!

**संजीवशिवः** – प्रभो मम कर्तव्यं मया कृतम्, श्वः अहमेव स्वयम् आगत्य राजकुमारीं पश्यामि ।

**राजा** – भवतु महाशय राजकुमार्या सह अस्माकमपि आयुरारोग्यस्य भाग्यं दत्तवान् तात ! तवोपकारं कदापि नैव विस्मरामः ।

**राजकुमारी** – वैद्यमहाशय, सा स्थविरा राजगृहमायाति चेत् किं करवाणि?

**संजीवशिवः** – किमपि नैव कुरु । मूलमिदं चर्वती क्रीडन्ती तिष्ठ (ददाति सर्वे प्रस्थिताः)

## मातरं विना सुतः

(रात्रौ माता एकाकिनी वैद्यशालायां उपविष्टा), हरिण शिशोः नेत्रावत्याः शवः एकत्र पतितोऽस्ति । अनागतनिद्रः संजीवशिवस्तत्रागच्छति ।

**संजीवशिवः** – एतावत्यां निशायां कोऽपि जाग्रतो न स्यात्, त्वमपि न स्याः इति मन्ये, मातः ।

**माता** – स्वापयोग्या निश्चिन्तास्थितिः मम नास्ति, सुत । मम मनसः समाधानमेव नष्टं वर्तते ।
तवापि निद्रा नागता वा

**संजीवशिवः** – प्रीत्यास्पदं पोतो नेत्रावती कुणपो भूत्वा यथा पतिता तां घटनां कथं वा विस्मरिष्यामि ? मातः ।

मृदुशरीरसुवर्णसुलाञ्छितां
गगनसंगतलक्ष्यविलोचनां ।
उदरविद्धशरां मृगपोतकां
स्फुटितनाभि–विनिस्रुतशोणितां ।।

रुधिरसेचित–भूमितलं तथा
शबरलोक–विघातुककर्म तत् ।
जननि मन्तुरयं बहुभीषणः
नखलु वीक्षितुमेव च शक्नुमः ।।

**माता** – ममापि अतीव खेदो जातः ।

**संजीवशिवः** – राजसुतायाः गह्वरप्रवेशनिषेधस्य तथा नेत्रवत्याः मरणस्य च सम्बन्धोऽस्ति किम् ?

**माता** – यद्यस्तिचेत् – म्रियमाणानां कृते जीवप्रदाता आहोस्वित्, जीवितानां जीवं निष्कासयन् प्रौढवैद्यस्त्वमेव जानासि खलु ।

**संजीवशिवः** – तव मार्गदर्शनं विनैव राजकुमार्यै औषधं दत्तमिति कोपः किं मातः ।

**माता** – पूर्वं यदा त्वं प्रौढो नासीः तदा उक्तानि हितवचनानि शृणोषि स्म । अधुना तु महान् जातो भवान् तात! जननी एव कनिष्ठा भूता, तस्याश्च नियमबन्धनानि अनादृत्य, संभ्रमेण वर्तसे । यशसश्च अहंकारात् संपूर्णतया देहोपरि बन्धयतस्ते स्थविरजनन्याः किं प्रयोजनम् ?

**संजीवशिवः** – खेदो भवति मे हृदयस्य तव वचनेन, व्यङ्ग्योत्या च। त्वां विहाय, अन्यः कोऽपि हितकरोऽस्ति किम् मे? समाकृष्टा इव गह्वरे धावन्तीं राजकुमारीं रोद्धुं अन्तराय इव तिरश्च स्थित्वा हस्तःप्रसारितः तदा नाडीसहितःतस्याः हस्तो लब्धः, मातः अर्धक्षणे एव कवेःयथाकाव्यस्फुरणं भवति, तथा तस्याः समग्र–रोगस्य रहस्यं स्फुरितम् । तस्मिन् सन्दर्भे कोऽपि उल्लासः तथा अहंकारः मयि जाग्रतः इति तु सत्यं मातः ...... सा च नाडी ग्रीष्मर्तौ दुन्दुभिताडनमिव स्फुरति स्म । तव आशिषः प्राज्याः
बहुदिनेभ्यः चिकित्साविधानस्यैकस्य प्रयोगार्थं उत्सुकः आसम् ।
रोगिणं प्रसन्नं कृत्वा स्वदेहस्योपरि यथा नियन्त्रणं प्राप्तं भवति तथाकरणमेव तत् विधानम् ।
तस्मिन् सा तथा यशस्विनी जाता नाम यावताहं नाडीं परीक्षमाणः तावता ज्वरः नियन्त्रितोऽभवत्, मातः।

**माता** – सत्येन साकमनृतस्य मिश्रणं कृत्वा वदसि पुत्र,

कृतकवचो वदसि ।

सा स्थविरा आगत्य मम स्मरणं नैव दत्तवती किम्? उत्तरं देहि ।

**संजीवशिवः** – तथा कोपं नैव कुरु मातः । त्वं यदा च कोपं कुर्वती आस्से अहं तु कनीयान् बालको भूत्वा आज्ञाधारकः स्थितो भवानि इति अपेक्षा जायते ।

त्वां च तोषयितुं यां कामपि क्रीडां खेलानीति इच्छा जायते ।

कृपया अद्यप्रभृति त्वं शटवीमाता इत्येव भव, एकवारं ज्येष्ठो भूत्वा पुनः कनीयान् भवितुं नैव इष्टं मे ?

**माता** – मम प्रश्नस्य इदमुत्तरं न पुत्र । परिवृतानि अनृतानि विमुच्य सत्यमध्ये स्थित्वा यत् तत्थ्यमस्ति तत् स्वीकुरु।

रोगी यज्जीवितो भवति तत् मातुः मार्गदर्शनाद्वा तव भेषजेन वा? इति विचारं निकषायितुं त्वयि उत्सुकता नासीदवा । मातुः मार्गदर्शनस्य व्यपदेशात् तव भेषजमेव उच्चैस्तरमिति त्वयि आन्तरिकाहंकारो नासीद् वा?

**संजीवशिवः** – मम हृदयस्य सर्वाण्यपि रहस्यानि त्वया ज्ञातचराण्येव मातः, त्वत्तश्च गोपायने किमस्ति? अहं तु द्विशीर्षको गण्डभेरुण्डपक्षीव जातोऽस्मि । क्षम्यतां, मातः । द्वेऽपि मुखे उद्धृत्य परस्परविरुद्धदिशायां पश्यन्तीं भवतीं समाहितां कर्तुमथवा जेतुं तन्त्रोपायं कुर्वन्नस्मि। मुखमेकं भवतीं जननीति वदति, एकं छित्वा अपरं स्थापनीयं (स्थाप्यं) इति तव वाञ्छा । मम दुर्दैवं तावदेवमस्ति यत्, यत् किमप्येकं छिनद्मि अपरस्मिन्

तावत् गरलमुपसृपति । किं करवाणि वद मातः ।

**माता** – सापत्नजनन्योः चयनं कुर्वाणस्त्वं खलु पुत्र नाहं । तवौषधस्य विषये किञ्चित् वक्तुकामास्मि । जीवानां कृते औषधमञ्चसैव उपकरोति, सत्यं, परं चरमनिर्णयस्तु भेषजस्य न, पुत्र मानवस्तु अहंकारोपरि उपविश्य सारथ्यं कुर्वन्नस्ति, अत एव ते सत्यं न गोचरो भवितुमर्हति ।

**संजीवशिवः** – एतावता गांम्भीर्येण निःसन्दिग्धमेव नैव चिन्तितं मया अकाले कस्यचिदपि जीवितं निर्गतं न भवेदित्येव मे चिन्ता । तथैव प्रेरितोऽहं तवाज्ञां विनैव राजकुमार्यै भेषजमदाम् ।

**माता** – एकस्य कालं अकालं वा निर्धारयिता त्वं कोऽसि । तव भेषजेन तस्याः दैवनिर्णयं कर्तुमर्हसि किम् ?

**संजीवशिवः** – तथा चेत् मातः ममौषधस्य, मानवस्य प्रयत्नस्य च मौल्यमेव नास्ति किम् ?

**माता** – पुत्र सत्यं तावत् अतिवेलं गभीरे तले वर्तमानं
तावत् पर्यन्तं निमज्योत्थातुं
शक्तिर्नास्ति ते विवेकस्य ।
दुःखस्यार्थे दुःखकरणं दुर्बलस्य लक्षणमिदं ।
हरिद्वर्णः किमिति हरिदस्ति
वृद्धाः वृद्धा इव किमर्थं सन्ति ?
मरणं मरणमिव, जननं जननमिव किमर्थमस्ति ।
इति तर्कयति चेत् किं किं फलं लभेत
जनः, पशुः न निधनं गच्छति किम् ?
तव मातापितरौ न मृतौ किम् ?
राजकुमार्याः मरणे को विशेषः ?

मरणं जगतः सामान्यनियमः किल ?

मनुष्य एव मरणमन्विच्छति चेत्, (मरणविषये) प्रीतिः किम् ? देहस्तु यथा वर्धते तथा मृत्वा जनिं लभते । दृप्तायाः बालायाः बालक्रीडायमानं वचनं प्रतिश्रूयते चेत् त्वं खलु स्वात्मानं न्यूनमौल्याय विक्रीतवानित्यर्थः।

**संजीवशिवः** – आवयोश्च प्रतीपप्रकियायां राजकुमारी तावत् नैव मृता स्यात् ।

इदमेकवारं मम भेषजस्य सार्थक्यं देहि मातः, राजकुमारी किमपि अकार्यं कृतवती चेत् तस्य मन्तोः फलं मयि परावर्तय ।

**माता** – अगाधशक्तिं दत्तवती सा । पूर्वं तावत् लघुरोगेण सह कलहं कर्तुं ते तावत् त्वदीयमातुः साहाय्यं अपेक्षितमासीत् । संप्रति तस्याः अवलोकनानन्तरं मया सह कलहं कर्तुं ते शक्तिरागता! तव रोगी तावत् राज्यस्य राजकुमारी !

ते तावत् त्वां सुवर्णं रजतं, वैभवोपेतायां शिबिकायाँ उपावेश्य, सहस्रेण बिरुदावलिना स्तावयित्वा श्वेताश्वं श्वेतच्छत्रं बहुमानरूपेण दातुं समर्थाः । अहं किं ते दातुं समर्था? परं पुत्र सा आयुष्यस्य भविष्यं नैव दातुं समर्था ।

**संजीवशिवः** – मातः का वा न्यूनता मय्यस्ति संप्रति वायुरस्ति, प्रकाशोऽस्ति वृष्टिरस्ति हरितः अस्ति अन्यदपि अपेक्ष्यते चेत् इष्टार्थदात्री माता त्वमसि ।

**माता** – मम तावदहमावृत्तेः तृप्त्यर्थं श्रवणसुखं वचनं वदन्नसि। मम तावदहंकारादयो न सन्ति पुत्र,

तव कवित्वं व्यर्थमेव मा व्ययीकुरु ।
ममाज्ञां विना राजकुमार्यै भेषजं दत्वा दैवसंकल्पस्य शपथहूतिं करोषि ।
प्रथमं तां लतां पश्चात् गृहाण ।

**संजीवशिवः** – राजकुमार्याः जीवितं तव हस्ते अस्ति ।
मम तावद् भविष्यं तस्याः हस्ते विद्यते । सर्वं विचित्रमस्ति खलु
तस्याः नयनयोः प्रभां नैव निवारय, मातः ।

**माता** – तव रदनच्छदयोः मुखेन सैव संभाषते इवाभाति ।
सर्वेऽप्येते (विषयाः) प्रीतियोगात् प्रारभ्य शयने अवसानपथमायान्तः कथाविशेषाः भवन्ति । कामो नाम ज्वलनः न प्रकाशः सः दहति न प्रकाशं यच्छति।

**संजीवशिवः** – अहं तावदिदानीमपि मम कथामेव नैव प्रारब्धवान्, एतर्हि एव विमर्शं प्रारब्धवती खलु, मातः,

**माता** – परस्परवञ्चनां नैव कुर्वः रक्षयन्ती ते जननी अद्य, अदृष्टबलापेक्षया न्यूना, इति एकवारं भणतात् एव, निर्णयो भवतात् एव, चर्चा मास्तु ।

**संजीवशिवः** – मातः, किमिदं ते वचनम् । मातरं विना सुतः अस्ति किम् ?
एतावद्वर्षेभ्यः अनन्तरमेव प्रथमवारं
मातरं पश्यन्नस्मीति भाति ।

**माता** – तन्नाम, एतावद् वत्सरपर्यन्तं त्वं
अनाथ एवासीः किं बालिश !

**संजीवशिवः** – (परीवाहितदुःखेन) मम तावत् जननी आसीत् सा वत्सलयति स्म माम्, अतिवेलं वात्सल्यं कुरुते स्म तरुः, महीरुहः, पक्षिणः एतेषां कण्ठस्वरेण शयनगीतं

गायति स्म । आकाशे तावत् वर्णचूर्णान् क्षिप्त्वा चित्राणि कारयति स्म ।
संप्रति कुत्र सा मम जननी ?

**माता** – तव माता तु अन्तःकरणरहितं शुष्ककाष्ठखण्ड इति ज्ञातुं त्वया इयान् श्रमः करणीयोऽभवत्
यदि पृच्छसि चेत् अहमेव
कथितवती स्याम् ।
इयदपि न वक्तीति चेत् कथं वा सा
जननी भवेत् । अहं तु अन्तःकरणहीना
केवलं अस्थिपञ्जर इवास्मि तात !

**संजीव** – मम सन्तोषक्षणाः सर्वे शून्यतां गताः मातः !

**माता** – ते तावत् तव मुष्टिबन्धे एव वर्तन्ते मुष्टिं विमुच्य त्वया तावदवलोकनीयं इत्येव । नवीनं तावद् यौवनमस्ति । लोके तावत् सहस्रसंख्याका रमणीमणयः सन्ति प्रथमं गच्छ! कृतमपराधं परिहृत्य (समाधाय) आयाहि ।

**संजीवशिवः** – तन्नाम

**माता** – परश्वः अमावास्यायाः अस्तमनात् प्रागेव, राजकुमार्याः कन्धरे या च औषधवल्ली बद्धास्ति त्वया, तदाकृष्य आगन्तव्यम् ।

**संजीवशिवः** – यदि न कृतश्चेत्

**माता** – (सकोपं) बालिशत्वविषये हठकर्तारः विद्यन्ते वा । यदि न कृतश्चेत् सा तु समकालमेव व्यक्तिद्वयं परिणयति। एका व्यक्तिस्तु, त्वमेव, अपरा च त्वयासह मरणमपि। विवाहमङ्गलं, तथा तस्याः निधनस्य नयनमनोहरं दृश्यं त्वया न विलोकनीयं इत्येव मम वाञ्छा ।

गिरिमल्लिके–

**गिरिमल्लिका** – मातः,

**माता** – मृतां तां नेत्रवतीं बहिराकृष्य क्षिप्त्वा नागम्यते किम्? (माता अन्तः याति, संजीवशिवः यदा दिग्भ्रन्तो भूत्वा यदा तिष्ठति स्म तदा गिरिमल्लिका मृगस्य (नेत्रावती हरिणस्य) शवं बहिः क्षेप्तुं आकृषन्ती गच्छति ।

## विवृतपिच्छा मयूरी

(राजगृहं राजकुमारी, पुष्पगन्धा च प्रविशतः)

**राजकुमारी** – पुष्पगन्धे,

**पुष्पगन्धा** – राजकुमारि, !

**राजकुमारी** – वैद्यमहाशयस्तु इदानीमपि नैव आगतः किल !

**पुष्पगन्धा** – इतश्च किं अचिरादेव आगतः स्यात्

**राजकुमारी** – भवती तु अद्य, लघुतरमेव प्रातः उत्थितवती । एतावता एव उद्याने सञ्चार्य आगतवती ।

दिवास्वप्नराजिना भारभूतयोः मे नयनयोः निद्रा एव नागता, महाशये ! अत एवोषस्येव उद्यानं गता आसम् । सस्यश्रेणी तावत् गाढमेव मधुरनिद्रायां सुप्तेति प्रशान्तमासीदुद्यानम् ।

याचाहं संचरन्ती आसम् स च सञ्चारः न कस्यचित् वित्तिपथमागतः । मयापि स्वागमनं निवेदयितुं गानमेकं शनैः कलायितम् । न कस्यापि श्रुतिपथमागतम् ।

अनन्तरं उदयाचलात् नूतनस्य सूर्योदयस्य मङ्गलप्रकाशो जातः, पश्य!

हरिद्पत्रेषु आर्द्रता यथोपन्यस्ता तथैवातपोऽप्यागत्य तृणपत्रेषु वज्रस्य खण्ड इव तुषारकणः स्फुरन् उद्याने तावत् कैलास एव च्युतः पतित इवाभवत् । हन्त ! अम्बक्क! पुष्पं विना परिमलं प्रसरन् कोऽयं तरुः इति परावृत्य पश्यामि, पार्श्वे एव स्थितोऽस्ति, सुखनिधिः कोमलः चम्पकतरुः!

हरिद्हृदयोपरि एकाकिकुसुमं तावत् विकसितं स्फुरद् वर्तते घृतदीप इव ।

शनैरेव तरुः यदा विधूतश्चेत्
अनामधेयः कश्चित् हरिद्देवः
दक्षिणपुष्पं यथा ददाति तथ वृन्तात् च्युतं
सुमं हस्ते एव पतितम् ।
प्रसूनस्य स्पर्शमात्रे एव जाते–
शुष्कीभूते ह्रदे नूतनं नीरं त्वरितं यथा धावति तथा, एकवारं अङ्गानि वक्रीकृत्य जृम्भणं कृत्वा देहः साचीकृतः, पश्य, नवदिनानां सर्वाश्च शक्तयः मम वशमागताः । तदैव निश्चप्रचं निर्णयः कृतः यथा पुनर्जीवामि इति ।

**पुष्पगन्धा** – कियद् वा दिनानि अतीतानि हितकरमेतादृशं वचनमाकर्ण्य ।
शुक इव भवती एवमेव संलपन्ती भवति चेत् एवमेव श्रृण्वन्ती तिष्ठामीति भावयामि ।

**राजकुमारी** – वैद्यमहाशयस्य विषयं त्वां प्रति एतावता नैव उक्तवती किल ।

**पुष्पगन्धा** – ह्यस्तनकालात् दशवारमुक्तमस्ति । पुनरेकवारं शृणोमि कथय–

**राजकुमारी** – तस्य कृते वक्तुं सुन्दराः शब्दा एव न लभ्यन्ते सखि!
वर्तुलाकारं वदनं भ्रमरकमयकेशवान्सः मनोज्ञः।
अङ्गनाः वशीकृता भवितुं यानि अनूनकानि लक्षणानि, तेषां कोशः तस्मिन् समृद्धं वर्तते ।
किमपि कृतकलेपनं विना साक्षादेव स्वीयमभिप्रायं वक्तुमर्हति सः ।
मामेव द्विवारं 'बालिशा' इत्यवदन् ।

**पुष्पगन्धा** – किमुक्तवती राजकुमारी? 'बालिशा' इत्युक्तवान् किम्?

**राजकुमारी** – नाडीपरीक्षणस्य व्याजेन करं धृत्वा तथैव चोरदृष्ट्या मामीक्षमाणः स्थितः तदा कोऽपि तिरोधानात् समागतः

**पुष्पगन्धा** – को वा को वा भविता? स एव मन्मथः। तिरोहितः स्थित्वा द्वयोरुपरि पुष्पबाणान् प्रयुञ्जन् आसीत् ।

**राजकुमारी** – प्रीतिः इत्युक्तौ का सेति वद रे सखि ।

**पुष्पगन्धा** – प्रीतिः नाम, सा खलु सोढुमशक्यां व्यथां वितरन् गन्धवाहः इति कवयो वदन्ति ।

**राजकुमारी** – अथकिम् अथकिम् ! सः यदा नाडीं पश्यति स्म तदाहं तूष्णीमेवस्थितासम्, काननात् एको मन्दमारुतः स्वयमेव वहन् आगत्य, सम्पूर्णमेव कलेवरं विलिप्य तिरोहितोऽभूत् । अनन्तरं यदा पश्यामि ममहृदयं व्रणितमभवत् । संप्रति तु अन्नाहारादिकं नैव रुचिमावहति, निद्रा नीरं वा नैवापेक्ष्यते, कस्मिन्नपि आसक्तिरेव नास्ति । केवलं विनिश्वासाः समायान्ति।

**पुष्पगन्धा** – हीहन्त! वराकी !

**राजकुमारी** – अहं तु तस्य दर्शनात् प्रभृति लुण्ठितास्मि संवृत्ता । मयि तावत् न आत्मा, न मनः न हृदयं सर्वं लुण्ठित्वा गतोऽस्ति सः । अवशिष्टस्तावत् अयमेको जीवः (प्राणाः) इममपि गृहित्वा गच्छेति तं वद रे सखि!

**पुष्पगन्धा** – शान्तं पापमिति वदन्तु । किमिति एवमादिकं वदन्ती तिष्ठति अम्बा ।

**राजकुमारी** – राजकुमारी त्वं तु परमसुन्दरी इत्यवदत् सः । त्वादृशीं मनोरमां एतावत् पर्यन्तं नैव दृष्टवान् इत्यवदत् ।

**पुष्पगन्धा** – सतु तत्थ्यमेवोक्तवान् किल ।

**राजकुमारी** – अनूनकायामपि रजन्यां स्वप्ने अगणितवारं तस्य

रदनच्छदौ मम नयनयोः, ओष्ठाधरयोः, कपोलयोः उपरि सृपतः स्म, सखि, सर्वमिदं श्रुत्वा तव किं भाति मनसि ?

**पुष्पगन्धा** – भातीति किं, भवत्याः तावत् वैद्यमहाशये प्रीतिर्जाता इति तु सत्यमेव ।

इदमेव स एव पूर्वं उक्तवान् इति चेत्

अतीव सुष्ठु आसीदिति तु अस्मादपि अधिकतरं सत्यम्।

परं तस्य मनसि किं वर्तत इत्यवगमनं तु अस्माभिः साधयितुं नैव शक्यते इति तु केवलं सत्यम् । एतावन्ति सत्यानि न्यूनाधिकानि कृत्वा अहमेव भवत्याः कामनां निवृत्य यद् वक्तव्यमस्ति तत्तु समयोचितं सत्यम् । समीचीनं किल राजकुमारि!

**राजकुमारी** – एतावदेव सखि ।

परं सोऽपि मयि प्रीतिरस्ति इति वदति चेत् क्लेशो नास्ति । यदि नो इति निगदति चेत्

**पुष्पगन्धा** – तदा किं करवाणि ?

**राजकुमारी** – "आर्य, वैद्यमहाशय, यदि त्वं तस्याः प्रीतिं तिरस्कुरुषे चेत्, (प्रीतेः तिरस्कारं अकरिष्यः) तदा राजकुमारी तु हताशा भूत्वा, निराशया तस्याः बुद्धिभ्रमो भवति, बुद्धिभ्रमेण भोजनं निद्रां च परित्यज्य मरिष्यतीति" भण किल ।

**पुष्पगन्धा** – तत् किमिति, अम्ब, वचने वचने मरिष्यामीति वदति। सः अङ्कीकरोत्येव, तुष्णीं तिष्ठतु भवती ।

**चेटः** – (प्रविश्य) पुष्पगन्धे, महाराजेन साकं वैद्यः संजीवशिवोऽपि आगच्छन् अस्ति ।

**राजकुमारी** – (सानन्दम्) पुष्पगन्धे, अहं तु स्वपन्ती वर्ते । राजकुमारी कुत्र इति पृच्छति चेत् तदा त्वं मां प्रति दर्शय । स च आगत्य मम हस्तं धृत्वा नाडीं वीक्षते। स्वेदं मार्जयति, ह्यः स एव स्वेदमार्जनं कृतवान् किल ! (स्वपिति)

**पुष्पगन्धा** – राजकुमारि! भवत्याः सर्वाण्यपि, यौवनस्य चातुर्यस्य प्रीतेश्च आयुधानि नयनयोरन्तः स्थापयित्वा साक्षादेव, तस्य हृदयं एव लक्षीकृत्य प्रहर । नवीन इति तव लक्ष्यं च्युतं भवेत्, तथा भवति चेत् पुनः पुनः प्रहारकार्यं नैव विस्मर ।

(ततः प्रविशतः राजा संजीवशिवश्च)

(उभावपि नमस्कृत्य) राजकुमारी तावदिदानीं अतीव निरामयोल्लासेन तिष्ठति । मा इत्युक्तेऽपि प्रातः उद्याने संचार्य समागता ।

आगमनान्तरं तु अतीवोत्साहेन भणितवती । संप्रति विश्रान्तिं कुर्वती आस्ते ।

(संजीवशिवः राजकुमार्याः शयनं उपसृत्य, नाडीं स्पृशन् परीक्षते । फालं स्पृष्ट्वा स्वेदमार्जनं कुरुते । राजकुमार्याः सन्तोषो जातश्चेदपि संजीवशिवः संकटं अनुभवति)

**पुष्पगन्धा** – (प्रविश्य) प्रभो स च विहङ्गः समागतः । भवानपि आगच्छतु इति विदूषकः विज्ञापयति ।

**राजा** – अयमागत एव । वैद्यमहाशय, अचिरादेव निवर्तिष्ये। त्वं च राजकुमार्याः देहस्थितिं वीक्षमाणस्तिष्ठ । पुष्पगन्धे,

**पुष्पगन्धा** – प्रभो!

**राजा** – सहकारं कुरु (इति गच्छति)

**संजीवशिवः** – संप्रति कण्ठे एतस्याः लतायाः आवश्यकता नास्ति, निष्कासयामः।

(झटित्येव, राजकुमारी उत्थाय पुष्पगन्धां प्रति पश्यति)

**पुष्पगन्धा** – मास्तु मास्तु सातु तथैवास्तु । राजकुमार्याः तावत्, तस्याः लतायाः विषये अतीव विश्वासः समागतस्तिष्ठति ।

**संजीवशिवः** – (साघातम्) परन्तु ........

**पुष्पगन्धा** – न कोऽप्यपायश्चेत् तृप्तिपर्यन्तं सा तु व्रततिः तस्याः कण्ठे एव तिष्ठतु नाम ।

**संजीवशिवः** – (स्वगतम्) अपायस्तु मेऽस्ति ।

**राजकुमारी** – वैद्यमहाशय, ह्यः तव जननीविषये पदे पदे वदन्ती सा महिला त्वया सह संप्रति नागता ? नैव किल?

**संजीवशिवः** – नैव नैव

**राजकुमारी** – तथा चेत् तव जननी अनन्तकरुणामयी ।

**संजीवशिवः** – परं इमां लतां विसृस्य निष्कासनम् अनिवार्यं भवति।

**राजकुमारी** – निश्चप्रचमेव अहमिमां (लतां) कण्ठात् नैव निष्कासयामि ।

पुष्पगन्धे! भवती अपि किमिति नैव भणति ।

**पुष्पगन्धा** – वैद्यमहाशय, उदारमनसा राजकुमार्याः मानसं अवगच्छतु ।

जननीविरहिता तनया इति वात्सल्यातिशयेन महाराजाः राजतनयायाः कामपि लघुतरामपि कामनां नैव निराकृतवन्तः ।

**स्थविरा** – (प्रकटिता भूत्वा) वत्स संजीवशिव, तव माता तवकृते तत्किमपि स्मारयितुं कथितवती, स्मृतिपथे वर्तते किल ।

**राजकुमारी** – (सभयं धावन्ती आगत्य संजीवशिवं परिष्वजति) अहो ह्यस्तना सा महिला पुनरद्य दृष्टिगोचरः संवृत्ता। केवलं परिवृता सीरिका एव दृश्यते, अन्तस्तावत् शून्यमेवास्ते ।

**पुष्पगन्धा** – कुत्र, कापि न दृश्यते खलु राजकुमारि?

**संजीवशिवः** – तदर्थमेव कथयामि राजकुमारि, कृपया तां भेषजलतां द्रुतमेव कण्ठात् निष्कास्य देहीति ।

**राजकुमारी** – यदि मया मृतया भवितव्यं चेत् लतामिमां निष्कास्य क्षिपस्व ।

**पुष्पगन्धा** – वैद्यमहाशय,

भवद्भ्यः नीवेदनीयाः विषयाः केचन सन्ति । कृपया शृण्वन्तु ।

राजकुमारी यदा जीविताशां पर्यत्यजत् भवान् तस्यै जीवितदानमकुरुत । राजकुमारी तावत् कृतज्ञतया वा कारणान्तरेण वा निर्णयमेवं गृहीतवत्येव यथा भवन्तमेव परिणेष्यामीति । तं च मत्समीपे भूयो भूयः विघुष्योक्तवत्येव । अपिच भवता बद्धा सा भेषज्यलता एव मङ्गलसूत्रमित्येव भावयित्वा प्रातः तां स्पृशन्ती पश्यन्ती नयनयोश्च प्रणुदितवती । यदा स्थितिरेवं वर्तते, तां च निष्कास्य नीयते चेत् तस्याः जीवितस्य गतिः का- विचारं कुर्वन्तु भवन्तः।

**संजीवशिवः** – अयं च विषयः महाराजैः ज्ञातो वा

**पुष्पगन्धा** – निश्चप्रचं जाज्ञायते । तस्याः जीवने तया चाभिप्रेतो यः कोऽपि वा उपसृत्य मालां अर्पयति आहोस्वित् तन्तुं बध्नाति स एव विवाहः इति, तद्दिनादेव तस्याः आयुरभिवृद्धिरित्यपि दैवज्ञाः शिवनाम स्मृत्वा शपथेन

यदुक्तवन्तः तत्तु अस्माभिः सर्वैरपि स्मर्यते, महाराजैरपि। तस्मात् महाराजास्तु ह्यस्तनादेव दिनात् राजसुतायाः विकसितवदनदर्शनेन सन्तोषभरिताः सन्ति।

सा तु यदा भवतां रूपवर्णनं कृतवती तदनन्तरंतु महाराजस्य आनन्दस्य सीमा एव न विद्यते । अचिरादेवास्मिन् विषये भवता सह संलापं कारयितारः सन्ति महाराजाः। यदा चैवं विषयो वर्तते, ज्वलति व्रणे नखनिक्षेप इव भवतां वचनमिदं नैव शोभते ।

**संजीवशिवः** – ज्योतिर्विदः आयुषः वृद्धिरिति अवोचन् किम्?

**स्यविरा** – मूढविश्वासः (इति गच्छति)

**पुष्पगन्धा** – अथकिम् संप्रति राजकुमारीं भवतः पाणौ गृहणार्थं न्यसन्ती चास्मि । तन्नाम, सुष्ठुतरेण विचारं कर्तुं कश्चित् समयावकाशं ददामीत्यर्थः । समयो यदि लभ्यते चेत् शलाटुः पक्वो यथा भवति भवत्यपि पक्वा साध्वी बुद्धिरायातु इत्येव उद्देश्यः ।

जीवितावधौ एकस्य जीवितस्य पुनरुज्जीवनं नाम तात ! न खलु लघ्वीमात्रा, तदपि महान् पुण्यविशेषः। राजकुमार्या साकं तस्याः सन्तोषमेवावलम्ब्य स्थितस्य महाराजस्यापि, तथा तेषां परिवाराणां अस्माकमपि कृते यो जीवदानं कृतवान् स धर्मात्मा भवान्!

राजकुमारी आत्महत्यां कर्तुं धावन्ती आसीत् नाम किम्? तत्रैव मिलितो भवान् तस्यै भेषजप्रदानं नाम किम्? सर्वमिदं शिवस्य प्रेरणां विना मानवप्रयत्नैः संभवितुं शक्यते किम् ? शिवकृपा नाम इदमेव, महाशय!

अहं वा भवान् केवलं निमित्तमेव । वचनमेकं अतिशयमिवाभाति चेदपि संप्रत्येव भणामि– सुमुहूर्तस्तु यदाकदापि वा योजितः समायातु, राजकुमार्यास्तु भवता कण्ठे बद्धा लता विवाह– मङ्गलकार्यस्य मङ्गलसूत्रात् कस्मिन्नपि विधाने न्यूना इति न ! शुभं भूयात् उभावपि युवां संलापं कुरुताम् ।

(संजीवशिवः दिङ्मूढः, राजकुमारीच मानसिकतुमुले आसाते)

**संजीवशिवः** – एतादृशमन्त्यं प्राप्तुं क्रीडेयं समारब्धा किम् ?

**राजकुमारी** – तव कन्धरे स्वात्मानमाग्रहपूर्वकेणैव बन्धितवती (अहं) इति भाति किं ते ?

भवान् विश्वसिति वा न वा–

ह्यः तावदहं आत्महत्यां करवाणीत्येव गतासम् ।

त्वं तावत् मिलित इति तु अनिरीक्षितमेव ।

त्वं मांच यदा प्रशंसितवान् तदा सत्यमेव मे सन्तोषो जातः। न जाने किमर्थमिति । तज्ज्ञानात् पूर्वमेव तुभ्यमहं स्वात्मानं समर्पितवती आसम् ।

तदनु भवान् यदा इमां लतां कन्धरे बन्धितवान् तदा मङ्गलसूत्रमित्येव मदीया भावना आसीत् इदानीमपि अहं भवदुपरि स्थापितो दुर्भरो भार इति भवान् भावयति चेत्, तथैव भणित्वा गन्तुमर्हति । मम दैवमहं स्वयमेव पर्यवतिष्ठे (मम दैवस्याहं स्वयमेव प्रतिमुखी भवमि)

**संजीवशिवः** – राजकुमारि, उभयोरावयोः अधिकलाभस्तु ममैव जातः।

सन्तोषस्यानुभोक्ता अहमेव ।

शिवं साक्षीकृत्य शपथेन भणामि-
हृदयान्तरालेन तव प्रीतिं करोमि । मम वचसि
तथा प्रीतियोगे छिद्रं नास्ति । ह्यः त्वां यदा दृष्टवान्
तदा, बाल्यादेव त्वं मे परिचिता इत्यभात् ।
ह्यः मम माता मयि प्रीतिरुद्भूता इति प्रथमवारं
यदा अभिज्ञातवती तदा मम तावत् अभ्युपगन्तुं
विश्वासो नैवाभवत् ।
संप्रति तु सधैर्यमेव भणामि- ह्यः त्वां
प्रथमवारं (ऐदम्प्राथम्येन) यदा विलोकितवान् तदैव
त्वं मम प्रेमदेवतेति अङ्गीकृतवान् स्वस्मिन्नन्तरङ्गे ।
संप्रति तु त्वया सह भणितव्यानि वचनानि सन्ति ।
इदमिदं अत्र परस्परं सम्मुखं तिष्ठावः तव च मम च
स्वप्नैः सह । त्वं च स्वीयान् स्वप्नान् भण, अहमपि
भणामि। तेषु च उभावपि उन्मत्तत्वं मिश्रीकुर्वः ।

**राजकुमारीः** - उन्मत्तत्वं किमर्थं ?

**संजीवशिवः** - विश्वासमानेतुम् स्वप्नाः विश्वसितव्याः ।
विश्वसितव्यं चेत् उन्मत्तभावस्य मिश्रणं करणीयमेव।

**राजकुमारी** - सुष्ठु, अग्रे भण ।

**संजीवशिवः** - मानवेन ग्रहीतव्यस्य निर्णयस्य कृते क्षणास्तावत्
आयान्त्येवेति विदितमासीन्मया । परं मातुः प्रतीपं
गन्तुं निर्णयो ग्रहीतव्यो भवेदिति न कदापि
भावितमासीत् ।
तव च विवाहे पाणिग्रहणं करणीयमिति चेत् मया
तावत् स्वीयं स्वातन्त्र्यं लम्भनीयं भवति । स्वातन्त्र्यस्य
मौल्यं, तथा अनिवार्यत्वमावेदितवतीति ते कार्तज्ञेन
अधमर्णोऽस्मि ।

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi

स्वीयं स्वातन्त्र्यमनभिजानन् मानुषः स्वं परितः भयंकरं नरकं सृष्टवानित्येव भाति ।
स्वातन्त्र्यं नाम मनुष्येण मनुष्यो भवितव्यमित्येव ।
तथा न भवेदिति माता तु अस्मानभितः
मृत्योः जालं रचयति । राजुकुमारि, संप्रति मम मार्गः तावत् स्पष्टमेव मम दृष्टिपथमायाति, शृणु तावत् -
अहं तु पतिः त्वं च पत्नी, आवाम् वसावः अस्माकं उटजे एव । त्वं तु राजकुमारी भवेः परमहं राजा भवितुं नैव सिद्धः, त्वया तावत् इदमभ्युपगन्तव्यम्।

**राजकुमारी** – भवतुनाम, अहमेव राजगृहं विहाय अत्र आगत्य भवतः उटजे वसामि, सम्मतं किल ।
वैद्यस्य भार्या नाम, औषधं तावत् कुट्टयितव्यं किल।
निश्चप्रचमेव औषधं निघर्षयामि ।
सर्वदा च भैषज्यं निघृष्यते चेत् मृत्योः भयमेव न भवति, अस्ति किल ?
तदर्थं त्वया सर्वदा मह्यं औषधनिघर्षण कार्यं देयम् ।

**संजीवशिवः** – अनेन तनुतरेण(दुर्बलेन) कलेवरेण औषधस्य निघर्षणं कार्यं ?

**राजकुमारी** – इतः परं परिपुष्टा भवितुं प्रयतिष्ये ।

**संजीवशिवः** – उटजे वस्तुं अङ्गीकरोषि चेत् अलम् ।
अवशिष्टं कार्यं स्वयमहमेव करोमि ।

**राजकुमारी** – अवशिष्टं कार्यं नाम ?
यतोऽहं राजकुमारीति मे पाकक्रियां विधातुं नैव आयातीति ते अभिप्रायः किम् ?

**संजीवशिवः** – तथा न ।

**राजकुमारी** – मयापि पाककर्म कर्तुं ज्ञायते, महाशय!

शाकपत्रस्य सारम्, तण्डुलपाचनं कथमिति सर्वमहं जानामि । पुष्पगन्धा यदा पाकं कुरुते स्म तदा चौर्येण विलोक्य शिक्षितवती ।

**स्थविरा** – (प्रविश्य) वत्स, तव जननी अवश्यमेव त्वां द्रष्टुमिच्छति ।

(राजकुमारी भयभ्रान्ता संजीवशिवं परिष्यजति)

**संजीवशिवः** – राजकुमारि, पश्य, इमां लतामेव मङ्गलसूत्रमिति उक्तवती किल? तदर्थं मे सम्मतिरस्ति । इतः परं यदि जीवितौ भवावश्चेत् उभयोरपि एक एवोटजः। यदि न जीवावः तदा द्वयोरपि एकैव चिता । अभिमतं वा ते ?

**राजकुमारी** – शिवं साक्षीकृत्य शपथेन अभ्युपगच्छामि ।

(दूरस्थिते देवमन्दिरे घण्टानादः श्रूयते, उभावपि सन्तुष्टौ भवतः। सा स्थविरा फालताडनं भूयोभूयः करोति ।)

**संजीवशिवः** – राजकुमारि, प्रेम्णः उपहारं दातुं नैवाहं महात्तरोऽस्मि। अयं च मे विनयान्वितोपहारः । कृपया स्वीकुरु ।

(इति तत्रस्थितमेव चम्पकपुष्पं दातुं प्रवर्तते राजकुमारी तत् हस्तेन ग्रहणं विना, केशपाशे स्थापनार्थं परावर्त्य निष्ठति । संजीवशिवस्तु दायित्वभारात् भीतः) सकम्पं चम्पकं तस्याः धम्मिल्ले न्यस्यति । राजकुमारी रोमाञ्चिता भूत्वा स्वात्मानमेव विस्मरति । संजीवशिवस्तु 'पुनरागमिष्यामि' इत्युक्त्वा गच्छति । राजकुमारी तु पुनः पुनः कबरीं स्पर्शं स्पर्शं स्वस्मिन् संप्रवृत्तं नूतनं परिवर्तनं संभ्रमेण अनुभवति । दर्पणस्य पुरतः स्थित्वा पश्यन्ती आनन्दमनुभवन्ती तिष्ठति स्म ।

सकोपं आगता स्थविरा दिवंगतायाः महाराज्ञ्याः वर्णचित्रस्य पश्चात् तिष्ठति ।

**राजकुमारी** – (कबरीं स्पृशन्ती) चम्पक, चम्पक, इदमिदानीमेव त्वां मम धम्मिल्ले स्थापितवान् किल सः, तस्य नाम किं वद रे ।

**स्थविरा** – संजीवशिवः

**राजकुमारी** – अम्महे, अहो! शिवस्यापि एतादृशं सुन्दरं नाम नास्ति खलु!

नामधेयमिदं श्रावं श्रावं नूनं रोमाञ्चनं भवति पश्य, चम्पक !

यथा त्वत्तः परिमलः प्रसरति

तथैव नाम्नानेन प्रसरति नूनम् ?

परमयं परिमलस्तु त्वदीयपरिमलाधिकः आह्लादकरः।

मम पतिस्तु त्वां च मम धम्मिल्ले यदा भूषितवान्

तदा झटित्येव स्वात्मन्येव स्नात्वा, इतस्ततः चंक्रम्य रोमाञ्चिता भूत्वाः विवृतपिच्छा मयूरीवाभवम् सखि!

**स्यविरा** – मयूरीभवनस्य भ्रान्त्यां वर्तमानया त्वया लोकोऽयं नैव दृश्यते वत्से! सर्वत्र शरीरे नेत्रवत्यास्ते एकैकशः नेत्रं ते उन्मीलयामि । त्वं कुत्रस्थितासि तत् भूतलं विलोकय, लोलोक्यते किम्?

**राजकुमारी** – विलोक्यते ।

**स्थविरा** – तथा चेत् संप्रति कथय, वत्से त्वं किमिति तस्मै दरिद्राय वैद्याय स्पृहयसि ?

**राजकुमारी** – किमर्थमिति चेत् सः सत्यं वदति, तदर्थम् ।

**स्थविरा** – तन्नाम् ?

**राजकुमारी** – मां परितः ये सन्ति ते सर्वे मिथ्यावादिनः ।

मम तावत् अध्यापकाः यद्वदन्ति तत्र मया एकोऽपि विषयः नैवावगम्यते ।

मया नैव ज्ञायते इत्युक्तौ- अहो कियती वा चतुरमतिरेषा, इति महाराजानां पुरतः मिथ्या वदन्ति। एष एक एव यो हि मां 'बालिशा' इति सत्यं वदति।

**स्थविरा** – सत्यमुक्तवान् इति तदर्थं बहुमानं देयं प्राणा एव तस्य हस्ते न्यासीक्रियन्ते किम् ?

**राजकुमारी** – अथकिम्- तथा न्यस्ता इत्येव ननु, प्रतिश्रुत्य मां रक्षितवान् । राजवैद्याः सर्वे यदा हस्तं क्षिप्तवन्तः स एवाग्रे सृत्वा भैषज्यं दत्वा रोगं परिहृतवान् ।

**स्थविरा** – विवाहो भवति चेत् तेन सह जीवनं यापयितुं शक्यते किं त्वया? त्वं तु राजकुमारी, सतु हरीतकी वैद्यः ।

**राजकुमारी** – राजगृहं, राज्यं न किमपि मे रोचते । विवाहं कृत्वा आश्रमं निर्माय उभावपि कानने एव वसतिं कुर्व एव। अहं भैषज्यं निघृष्य दास्यामि, स तु मत्सदृशानां रोगिणां सेवां करोति ।

मम हस्तः निःसत्त्वो भवति चेत् स तु मामुपसृत्य साहाय्यं करोति । मम मुखस्य स्वेदं स एव मार्जयति। संप्रत्यपि स एव मार्जयति ।

नाडीं परीक्षितुं मम हस्तं यदा सः धरति तदा मम शरीरे रोमाञ्चनं जायते । अहं जानामि तस्यापि एवमेवैव भवति ।

**स्थविरा** – कथं ज्ञातं तत् ?

**राजकुमारी** – मया सह यदा सः तिष्ठति तदा श्वासस्तावत् यथा न्यूनो भवति तथा संभाषते ।

**स्थविरा** – त्वं तु अतीव चतुरा !

**राजकुमारी** – सत्यं किं? वैद्याय लपितमिदं वेदय, अम्ब, मां तु बालिशां इति सः मतवान् ।

**स्थविरा** – स तु मुर्ख एव । एकैकमपि लघुविषयं अवगन्तुं स तु एकैकमनूनकं दिनमेव गृह्णाति । तस्य जनन्याः विषयः त्वया विदितोऽस्ति किम् ?

**राजकुमारी** – विदितोऽस्ति मे, सुकुमारशिशूनां कण्ठं विनूद्य हत्वा खादतीति । परं तव विषयो नैव ज्ञायते एतावानेव ।

**स्थविरा** – वत्से, नैव प्रत्यभिज्ञायते ? अहं तु ते जननी ।

**राजकुमारी** – मम तावत् सर्वाण्यपि नेत्राणि समुन्मील्य बहूपकारं कृतवतीति शतं प्रणामास्ते मातः । मम तावदिदानीं सर्वं स्पष्टमेव दृष्टिपथमागच्छदास्ते । कथयामि किम्? मम माता तावन्निधनमेत्य दशवर्षाणि अतीतानि । संप्रति, मम जनन्याः नाम, अन्यदा, वैद्यस्य नामधेयं गृहीत्वा आयान्ती त्वं का इति तु नैवाहं जाने । प्रायशः, वैद्यस्य माता अथवा तस्याः सखी यदि त्वमसि चेत् वचनमेकं भणमि शृणु–

सद्य एव मे धम्मिल्ले पुष्पं विभूष्य गतःकिल स वैद्यः सः मम भर्ता इति यदा लब्धः तस्मिन्नेव क्षणे मातः, एका लीलाविस्मयो जातः ।

पालकस्य शिशुः भार्या भूत्वा,
मूकीभूतायाः मे वचनमागतम्

यदसंभवं तत् संभवं जातं, यदघटनीयमासीत् तत् घटितमेव जातम् । सूर्यकिरणाः मृत्तिकां स्पृष्ट्वा विविधं सस्य प्रपञ्चं यथा जनयति, तथा दर्शनमात्रेणैव शताधिकानां भावनानां विकासने क्षमः, व्यथायां वर्तमानानां मृत्युमुखाद्विमुच्य आनयने क्षमः

किमर्थमित्यज्ञातेन विकसितस्य मे जीवनस्य सार्थक्यमापादयितुं क्षमः यः स एव पतिरिति यदा लब्धोऽस्ति अहमिदानीं न कस्मादपि बिभेमि मातः त्वत्तः तव मातुश्च!
त्वं तावदेवं अनुमतिं विना
यत्रकुत्रापि वा भवाम्यहं,
मातुः नाम गृहीत्वा तवान्तरागमनं तावत्
मे नैव रोचते ।
मम नयने तावत् सुष्ठुतरेणेदानीं उन्मीलिते स्तः
इति निश्चप्रचं ज्ञातं किल ।
संप्रति निर्गच्छ । पुष्पगन्धे

**पुष्पगन्धा** – (प्रविश्य) राजकुमारि !

**राजकुमारी** – एतस्यै द्वारं दर्शय
(स्थविरवेषस्थिता माता, साश्चर्यमेव तूष्णीं गच्छति)
(मदनतिलकस्य गृहं, मदनतिलकः तथा मञ्जरी प्रविशतः)

**मञ्जरी** – सत्यं वद, ह्यः स्वप्ने कया सह आसीः ।

**मदनतिलकः** – न कापि आसीत्, यदि स्यात् त्वयैव सह स्यात् !

**मञ्जरी** – सत्यमेव बुक्क रे, स्वप्ने तव सर्वं प्रलापादिकं श्रुतमेव।

**मदनतिलकः** – महाभागे मम वचः शृण रे ! अद्यतनस्य नाटकस्य सिद्धता तावत् करणीया एव
मार्कण्डेस्य संभाषणानां तावत् त्वया कण्ठपाठः करणीय एव
दीर्घालापादनन्तरं एकस्मिन् मूहूर्तसमये पद्यं वर्तते

**मञ्जरी** – मम अनुयोगस्योत्तरं प्रथमं देहि । त्वं तु तया वृद्धमहिलया मदरङ्ग्या सह उषितवान् किल ?

**मदनतिलकः** – मदरङ्गी का सा ?

**मञ्जरी** – उद्याने न कोऽपि तिष्ठतीति तत्रैव आगन्तुं भणति स्म स्वाप्नसंभाषणे ।

**मदनतिलकः** – अयं तु तव स्वप्नः महाभागे ।

**मञ्जरी** – तव स्वप्ने इत्योवाहं वदमि । यदि चायं मम स्वप्नश्चेत् तुभ्यं च तत्रैव पादप्रहारं दद्यां स्याम् ।

**मदनतिलकः** – भवतु नाम, एकवारमपि वा स्यात् तव स्वप्ने मे प्रवेशं देहि । त्वमेव जानासि किल अहं कथंभूतोऽस्मीति ।

**मञ्जरी** – यदि मे निद्रा आयाति चेत् किल ? त्वं तु कां कां स्वप्ने समानीय परिष्वक्तवान् भवसीति तव सन्दर्भपालनमेव मम कर्म भवति । एकस्मिन् दिने त्वमेव यथा न जानासि तथा तव स्वप्ने सवेगं प्रविश्य, त्वं च कया सह वर्तसे इत्यन्विष्य ज्ञात्वा तस्याः कर्णं तथा ते नासिकां कचकचेति न दंशयामि चेत् मम नाम मञ्जरी नेत्येव वद । त्वं तावत् एकः स्त्रीलम्पटः चपलचित्तः! धूर्तः यस्य भगवतोऽपि भीतिरेव नास्ति ।

**मदनतिलकः** – त्वं तु स्पृश्यसे चेत् चण्डिका, कलहप्रिया, विषकण्ठी च

**मञ्जरी** – धिक् त्वां अहं तु त्वयासह वस्तुं नैव शक्नोमि । इयमहो! प्रस्थिताहं मातृगृहम् । ..........
(प्रस्थिता, आयान्तं संजीवशिवं वीक्ष्य गृहं प्रविशति)

**मदनतिलकः** – अहो वैद्यमहाशय त्वं कदा आगतवान् ?

**संजीवशिवः** – कदापि पूर्वमेव, आगत्य त्वं च यां क्रीडां खेलसि स्म तामेव पश्यामि स्म । इयं ..........

**मदनतिलकः** – मम तावत् वामाङ्गं तन्नाम अर्धाङ्गी

**संजीवशिवः** – अहो, मदरङ्गी !

**मदनतिलकः** – मदरङ्गी ? का सा ?

**संजीवशिवः** – ननु तस्मिन्दिने मदरङ्ग्याः नाम भणित्वा मत्-सकाशात् भैषजं गृहीतवान् किल?

**मदनतिलकः** – शनैः भण, त्वं तु तस्याः पुराणरमण्याः विषयं उक्तवान् किल? सा तु प्रतनकथा, महाशय, तदा ममापि यौवनं नासीत् स्थविरायाः मदरङ्ग्याः प्रीतिरेव अनुग्रह आसीत् । तदनु त्वं तावत् दयां कृत्वा यद् दत्तवान् तारुण्यस्य भैषज्यं यद् गृहीतवान् किल, पश्य, छागस्य यौवनमागतं मे! तवच अत्यद्भुतं भेषजं गृहीत्वापि, स्थविरां स्थापयामि चेत् तव च भैषज्यस्य अपमानं स्यादिति एतां स्वीकृतवान् ।

**संजीवशिवः** – एषा कुत्र प्राप्ता ?

**मदनतिलकः** – परह्यः, यक्षगानमासीत् किल, वस्त्रापहरणस्य सन्दर्भः, दुःशासनस्य वेषं धृतवानासं, सरभसमहं यदा सीरिकां कृषन् आसं, यदा च हे कृष्ण त्राहि मां'' इति द्रौपद्यां गीतेन विलपन्त्यां, जनाश्च यदा मां विलोक्य सकोपं दन्तदंशनं कुर्वन्तः आसन्, इयमेकैव मां प्रति पश्यन्ती सानन्दं हसतिस्म, महाशय! लभ्यते वानवेति यदाहं पश्यत्नासम्- सा एव एकदृष्टिप्रहारं कृत्वां लब्धा एव महाशय! एतदृशं रसपूर्णं नारङ्गफलं यदा लब्धमस्ति, तदा मदरंगीसदृशं शुष्कशिम्बं, गतरसं उद्दालफलं कथं वा खादनीयम्?

**संजीवशिवः** – एतया सह कलहायमान आसीः, महाशय!

**मदनतिलकः** – इयं तावदपरा कथा । मदरंगी सैव वटवटायते इति

एतां कण्ठे बन्धितवान्, इयं तु इतोऽप्यधिकमेव वावदूकी, नो चेत् मामेव धिक्करोति, नो चेत्, शापं करोति, नो चेत् निन्दति, नो चेत्, वाचा वटवटायते, नो चेत्, मम स्वप्नायितानि वचनानि चौर्येण श्रुत्वा मार्जाल इव कलहं कुर्वती रात्रौ अनुभूतं दाम्पत्यसुखमनूनकमेव एवं दिवा वामयति, मम विषयं त्यज । त्वं किमर्थं इतः समागतः? तद्वद

**संजीवशिवः** – त्वरितमेव मम मातुर्विषये सत्यमेकं ज्ञतुमागतवान्

**मदनलिकः** – प्रतिप्रातः दृश्यमानायाः मातुः सत्यं पुत्रेणैव न ज्ञायते इति चेत् विश्वसनीयं वचनं भवितुमर्हति किम्? अहो स्वामिन्, विदूषकमेव हासयितुं प्रारब्धवान् ननु!

**संजीवशिवः** – गम्भीरभावेनैव पृच्छन् अस्मि । दयां कृत्वा उत्तरं देहि । त्वं खलु स्वात्मनः वेषपरिवर्तनक्रियया मृत्यवे एव उद्दालफलं अखादयः इतीदं सत्यमेव किम्?

**मदनलितकः** – मृत्योः भये, मृत्योः एव मम प्रत्यभिज्ञा नैव जायतामिति, प्रतिदिनमेव एकैकं वेषं तथा नामधेयं परिवर्तयन्नस्मीति वचनं तावत् सत्यमेव । मम च अभिनयेन मानवास्तु वञ्चिता भवन्तीत्यपि सत्यमेव। परं एते तु अन्धविश्वासा इति तु सर्वजनापेक्षया अहमेव दृढतरं जानामि । यतोहि यदि एते सत्या एव वर्तन्ते चेत् जगति न कोऽपि निधनमेव नोपैति स्म । सर्वेऽपि प्रतिदिनमेव एकैकं नामधेयं वेषादिकं च परिवर्त्य चिरंजीविनो भवन्ति स्म । परं अहमेकं प्रश्नं पृच्छामि, त्वं च प्रामाणिकरीत्या उत्तरं ददासि चेत् तदेव ते मार्गदीपः भवितुमर्हति ।

**संजीवशिवः** – कथय–

**मदनतिलकः** – तव माता तु मृत्योः अधिदेवता, शटवीमातरं तां विना तव वैद्यवृत्तिरेव नेति कथ्यते, सत्यं किम्?

**संजीवशिवः** – अथ किम् । सा तु अदृश्याभूत्वा रोगिणं दक्षिणेन वा वामेन प्रत्यक्षा भवति । दक्षिणेन भवति चेत् चिकित्सा करोमि इति तु माता मे वरं दत्तवती । मम तावत् यशसः रहस्यमिदमेव । संप्रति अनन्तरीयं यत् सत्यं तत् श्रुणु अरण्येऽस्मिन् राजकुमार्याः नाडीं यदा परीक्षमाणः मम माता तां वामेन प्रत्यक्षाभूत्वा, रोगिणं नाङ्गीकुरु इति सूचितवती, तथापि अहं भेषजं दत्तवान्। संप्रति सा कुप्यति । श्वः अस्तमनवेलायाः प्रागेव राजकुमार्याः गले बद्धां भेषज्यलतां विमुच्य आयाहि इत्युक्त्वा मां प्रेषितवती । राजकुमारी तावत् जीवितशेषा भवेत्, तादृशं कमपि उपायं वक्तुमर्हसि वा ।

**मदनतिलकः** – तव कृते मम गौरवं द्विगुणितं यद् जातं तत्तु मया वक्तव्यमेव । परं तव माता तावत् सिद्धप्रयत्ना, यत्र, यदा कथमिति प्रतीपमागच्छतीति अज्ञात्वा, तस्याः ग्रहणात् मोक्षणं नाम असाध्यमित्येव महाशय । एतावत् पर्यन्तं कोटिकोटिसंख्याकान् जीवराशीन् मारितवती। एकोऽपि परीवादः तस्याः उपरि वर्तते किम्? मायिनीशैलस्य गुहायां तव माता तावत् स्वीयकार्यकलापानां सौकर्यकारकं अन्धं तमः तत्र रहस्येन न्यस्तवतीत्येव कथयन्ति । परं ........

**संजीवशिवः** – परं तस्मादपि अधिकं नाम भ्रमात्मकस्य प्रकाशस्य तमसि अस्मान् स्थापितवती । मातुः समीपे यदा

स्थितः तदा पूतिगन्धात् मम नासिका तथा श्वासाः स्तिमिता भवन्ति स्म । सर्वोऽपि सः, मम भेषजस्य तथा मनुजानां रोगस्येति अयथार्थमवगतवान् आसम्। स तु मृतेः गन्ध इति अधुना सत्यं ज्ञायते । मानवः स्वस्य च पर्याये वर्तमानंमेव जीवितं कियदपि दुःखमयं, निकृष्टं, अर्थहीनं इति वदन्नपि एतादृशं संकरमयं नैव कर्तुमर्हति । पश्य, वैद्यमहाशय जीवनमिदं दुःखमयमिति को वा न जानीते । तथेति मत्वा अस्मासु तावत् कोऽपि शीर्षे हस्तं विन्यस्य नैवोपविष्टःकिल । स्वयमस्माभिश्च दृष्टानर्थान् वयं लभमाना एव वर्तामहे । एतावत् सर्वं नाटकं कर्तुं मह्यं तावत् प्रेरिका शक्तिस्तावत् का स्यात् ? निश्चितमेव अर्थवदिदं इति तु विश्वासो वर्तत एव, अस्ति किल?

**संजीवशिवः** – प्रपञ्चेऽस्मिन् अर्थस्तावदस्ति चेत् मनुष्यस्यैव, स च लभ्यते चेत् तेनैव, तमेवार्थं विनियुज्य माता तावत् अस्मान् शासती आस्ते, मया तावदवेक्षितः अर्थो न परं स्वातन्त्र्यम्, जनन्याः सकाशात् स्वातन्त्र्यं । जीवनमिदं जीवितुं योग्यं यद् भवति तत्तु स्वातन्त्र्येणैव भवति ।

राजकुमार्य्याःप्रीतिः मह्यं तावत् स्वातन्त्र्यस्य प्रथमं पाठं एतावता शिक्षितवत्येव । अहमिदानीं स्वातन्त्र्येण वैद्यकीयवृत्तिं गृहीतुं प्रवृत्तोऽस्मि । माता तावत् रोगिणं दक्षिणेन वा वामेन वा प्रत्यक्षा भवेद्वा न अहंतु मातृसकाशे ये आयान्ति रोगिणः सर्वेभ्योऽपि औषधं ददामि । सर्वमिदं अनन्तरं, संप्रति राजकुमारी त्वरिततया यथा जीवितशेषा भवेत् तादृशं उपायं वक्तुमर्हति वा ।

**मदनतिलकः** – तव परमात्मनि (भगवति) विश्वासो वर्तते किम् ?

**संजीवशिवः** – वर्तते

**मदनतिलकः** – तथा चेत् श्रुणु–रजाकुमार्य्याः जीवितं आपदि वर्तते इत्ययं विचारः महाराजैः न ज्ञायते । एतावदेव न, अपायात् सा विमुका इत्येवाद्यतनं नाटकं योजितवन्तः। तेभ्यश्च विचारस्यास्य कथनेन न किमपि प्रयोजनम्। ते तावत् राजकुमार्या सह नाटकं विलोकयन्तः सन्तु नाम । कानने विद्यमानं ;चन्द्रशेखरस्य देवकुलं तावत् जाग्रतं स्थानमित्येव प्रसिद्धिरस्ति । तत्रस्थाच्च शिवलिङ्गात् साक्षात् परशिव एव प्रत्यक्षो भूत्वा अनेकेभ्यो दर्शनं दत्तवानिति प्रतीतिरस्ति । मार्कण्डेयमुनेः शिवदर्शनान्तरं आयुरभिवृद्धिरत्रैव जातेति, भणन्ति । एतावन्मात्रमिति न, एवंरीत्या शिवदर्शनं ये लब्धवन्तः तषु तव पितापि अन्यतम आसीत् । त्वं किमर्थं तत्र गत्वा प्रयत्नादिकं न कुरुषे कथमपि श्वः अस्तमनपर्यन्तं समयोऽस्ति ।

**संजीवशिवः** – अथकिम् । तथैव कुर्मः (इति गच्छति)
(शिवस्य देवकुलम्, शिवस्य स्तुतिं कुर्वन् संजीवशिवः प्रविशति)

**संजीवशिवः** – चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ।।
देव–सिन्धु–तरङ्ग–शीकर–सिक्त–शुभ्र–जटाधरं
भाललोचन–जातपावक–दग्ध–मन्मथ–विग्रहं
अन्धकान्तकमाश्रितामर–पादपं शमनान्तकं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ।।

मृत्युभीतमृकण्डुसूनु–कृतस्तवं शिवसन्निधौ
भक्तवत्सलमर्चितं निधिमक्षयं हरिदम्बरम् ।
पूर्णमायुररोगितामखिलार्थ–संपदमादरं
चन्र्दशेखरमाश्रये मम किं करिष्यति वै यमः ।
(अत्रान्तरे शिव एव नृत्यं कुर्वन् प्रत्यक्षो भूत्वा
आशीर्वादप्रदानस्य भङ्ग्या तिष्ठन्)

शिवः – भो भक्ताग्रेसर!
भक्ताः शिव इति वदन्ति चेत् अलं, भोः
इति शिलायाः बहिरागन्तव्यं मया । इदमिदं पश्य,
तव च निर्मलां भक्तिम् पुरस्कृत्य आगतोऽहं
कथय पुत्र, किं अपेक्ष्यते ?
शिवः एवं यदा वचो वदति संजीवशिवः विस्मितो
भूत्वा तिष्ठति
भो भक्तशिरोमणे!
तव च स्तवनात् पूर्वमेव अहं वचांसि भणितवानिति
बिभेषि? आहोस्वित् अहं शिवः अस्मि वा न वा
इति संशयो वा ।

**संजयशिवः** – (भ्रमाविष्टः) तथा किमपि न

**शिवः** – भक्त्या तावदहं सुलभतया प्रसीदामीति, विदितमेव
स्यात् । हरिदासानां पदानि नैव श्रुतानि किम् ?
त्वं तु स्थित्वा स्तौषीति अहं तु नृत्यन् आगतोऽस्मि।

**संजीवशिवः** – (विश्वस्य) धन्यो जातः, तात ।

**शिवः** – सत्यमेव ?

**संजीवशिवः** – अथकिम्, सत्यमेव ।

**शिवः** – त्वं तु मदीयकैलासवासिनः भक्तशिरोमणेः
कीर्तिशिवस्य पुत्रः किल?

**संजीवशिवः** – सत्यं, कीर्तिशिवस्य सुतः । शटवीमातुः कृतकतनयः संजीवशिवोऽहम् ।

**शिवः** – साधु साधु भक्तानां महती परम्परा एव तव पश्चाद्भूम्याःकृते वर्तत इत्यर्थो जातः । तथा चेत् त्वरां कृत्वा, शीघ्रमेव वरं वृणीष्व......... तुभ्यं वरमदत्वा मे तुष्टिर्नास्ति । सामान्येन, मनोन्मथनं कृत्वा पृच्छकानां वरानुयोगात् पूर्वमेव वरप्रदानं मम स्वभावसरणिः । परमस्मिन् दिने, तव मनसि किं वा वर्तते इत्येव न ज्ञानपथमायातीति एवं मुखं व्यादाय वक्तव्यमभवत् ।

**संजीवशिवः** – पुत्राणां कष्टं तातं विहाय अपरेण केन ज्ञातुं शक्यते, तात ।

**शिवः** – अस्ति किल? अस्ति किल? त्वां पश्यन्
तव पूर्वापरयोः, तथा सांप्रतिकस्य जन्मनां कष्टानि विज्ञातानि, वत्स! परं संप्रति त्वरया कस्य दुःखस्य निवारणं करणीयं भवतीति ज्ञायते चेत् ....

**संजीवशिवः** – स्वामिन्, मम तावत् मतिभ्रमणं प्रवर्तते, देवानां देव, महादेव, इयत् सुलभमेव ..........

**शिवः** – अर्चकं प्रति फालताडनेन तारस्वरेण प्रलपितवान्, यथा यथा सुलभाः भवेम तथातथा अस्माकं मौल्यं न्यूनं भवति तातेति । आगताः भक्ताः द्वित्राणि घटिकादीनि स्तुतिं कारं कारं, गायं गायं, कण्ठशोषणां कुर्वन्ति, ध्वनिःयदा स्थगितो भवति, आग्रहपूर्वकं प्रसन्नतायाः अभिनयं कृत्वा वरं दास्याम इति । परं मम वचनं सतु नैव श्रुतवान् । संप्रति तु–
विलोकयामश्चेत्, मम तावत् परमभक्तस्यैव मम विषये

संशयः उदितः । पश्य तात, तुभ्यं यश्च देयो वरः तं तव जननात् पूर्वमेव कण्ठपाठः कृत आसीत्, परं दुष्टहतकः सः विस्मृतो जातः, समयः व्यर्थो न करणीयः इत्येव साक्षादेव प्रस्तुतव्यवहारमायातः इयानेव । मम विषये संशयो जातश्चेत्, इदमिदं पश्यात्र जटायां सत्यः चन्द्रः जलमपि अस्ति । फालदेशे नेत्रमप्यस्ति । यदि निश्चितं न भवति चेत् स्पृष्ट्वा पश्य, आहोस्वित् ताण्डवनृत्यं कृत्वा दर्शयामि किम्? पार्श्ववाद्यकाराः इत आगच्छन्तु .......

(शिवः भूमिं विलोक्य)

इदं भूतलमस्ति किल, वक्रोपवक्रं, ताण्डवस्य कृते नेदम् । अपिच एषुदिनेषु पार्श्ववाद्यं ये अधीयते तेषां तालज्ञानं न पर्याप्तमस्ति ...... ।

**संजीवशिवः** – अपिच भवतेऽपि अभ्यसो न पर्याप्तः ।

**शिवः** – अरे त्वमयम्, को वा त्वमसि रे ?

**संजीवशिवः** – तव सुतः संजीवशिवो मातः! केवलं मदनतिलक एक एव नटः इति भावितम् । संप्रति मम मातापि नटीभूत्वा अभिनये प्रवृत्ता । परं त्वं तावत् दुष्टा नटी, मातः ।

**माता** – (निजवेषभूषणे) अहं का इत्यवगन्तुं इयान् समयः अपेक्षितः किम् त्वया? प्रारम्भादेव असमीचीनमेव अभिनये कृतेऽपि त्वया नैव प्रत्यभिज्ञाता किल? त्वं तावत् दुष्टः प्रेक्षकः इति प्रथममङ्गीकुरु । भगवान् इव अभिनयो नाम इयान् सुलभः इति नैवावग तमासीत्।

सः यथा उपविशति, तिष्ठति, तथा तस्यैव शैल्यां

आशीर्वादप्रदानं नाम अतीव सरलं, महाशय! एकवारं ज्ञायते चेत् भगवतः कृतिविशेषान् यथा लाभदायकं भवति तथा निर्मातुं शक्येत । तव भगवानपि अतीव तीक्ष्ण इत्येव, महाशय! ऋतूनां परिणाममनुसृत्य समयोचितं वर्णं धारितवान् खलु ।

आकाशे उन्नतपर्वते सुन्दरं देवकुलं निर्माय अम्बरादपरस्मिन् भागे सौदामनीं प्रकाशितवान् तस्मिन् मेघज्योतिषि मानवः यदि तीक्ष्णदृष्ट्या नयने विस्तार्य स्थितश्चेत् सा तडित् स्वयमेवेति संभ्रमयति । विज्ञानविस्मरणयोः क्रीडायां, मानवः यद्यपि विसरति चेदपि भगवान् जानाति, यत् तस्यां तडिदि, विद्युतः परिवेषणं यद् वर्तते तत्तु मानवेनैव ।

एते देवाः एकोवा द्वौवा!

आहत्य षट्त्रिंशत्कोटिः, परीवर्तश्च शिलादेवः, कलादेवः मृत्तिकादेवता वृक्षदेवः कनिष्ठभ्रातृदेवः त्रिणेत्रदेवः, नेत्रमयशरीरदेवः हसद्देवः, रोदनदेवः, विस्मयदेवः, हस्तमुखानि अष्टाष्टौ इति गणितवन्तः भयमारोप्य अभयप्रदाःदेवाः,

मनुष्यस्य कल्पनादुर्व्ययस्य साक्षिभूताः, एकैकस्यापि देवस्य कृते तस्य तस्याः वा संसारः वेषभूषणादिकं, गानं, पानं नर्तनं .... छेः, धिक्! एतैः कलुषितदेवैः जगदिदं रथ्योदकनालमकरोः तात! अलमनेन अभिनयेन।

पश्य तावत्, मम तु प्रार्थना मास्तु, अष्टोत्तरशत-सहस्रनामावलिपठनं मास्तु, संप्रति हृद्यं यद् गद्यं वर्तते तस्मिन् एव यदि भणसि अलं तेन ।

अहं का इति विज्ञातं किल
देवानां रिपुः, तव च उपमाता,
देशीयं नाम तु शटवीमायिनी ।
त्वं कोऽसि भण

**संजीवशिवः** – पूर्वमेकवारं मातुः वात्सल्यस्य
उत्तराधिकारी आसम् परमिदानीं
मात्रा परित्यक्तस्तु अनाथो भूत्वा
भग्नमहिमा भूत्वा निर्झरे पतितः संजीवशिवोऽहम् ।

**माता** – तत्तु त्वयैव स्वयमेव हठेन वितीर्णो दण्डः ।
मात्रा दत्तो न ।

**संजीवशिवः** – मम तावत् भग्नस्वप्न एको वर्तते, भणामि किं मातः?

**माता** – कथय

**संजीवशिवः** – कानने निर्झरस्य समीपे हरिद्वृक्षः, तस्याधः एकः पर्णकुटीरः तत्राङ्गणे द्वित्राणि पुष्पगुल्मादीनि । तत्र अहमस्मि रोगिभिःसाकम् । अन्तः राजकुमारी भेषजं घर्षन्ती आस्ते, मम कुटीर इव मम अहंकारोऽपि लघुरेव । मम च भेषजेन निरामयाः जाता रोगिणः "अहो कियान् शोभनो वैद्यः" इति उद्गिरन्ति । तावता एव मम हृदयं पीनं भूत्वा भगवद्दर्शनेन इव सार्थक्यमनुभवति । परं मातः,
इदानी पीनवक्षसि न किमप्यवशिष्टम् । यतोहि अन्तर्गृहे, भेषजं घर्षन्ती राजकुमारी नास्ति । अतः भेषजमपि नास्ति । तस्मात् रोगिणो न सन्ति, भगवानपि न दृश्यते, संप्रति, जीवनं यापयितुं भयं जायते, मातः ।

**माता** – यद् भयभीतो भवसि तत्तु योग्यमेव । यतोहि तव

तावत् भयोत्पादकौ द्वौ गदौ वर्तेते ।

**संजीवशिवः** – मम रोगः? कौ तौ, मातः?

**माता** – राजकुमारी तथा भगवान्

**संजीवशिवः** – केवलं राजकुमार्याः जीवमेकं उज्जीवय इतीदं मे निवेदनं कथं त्वं एवं तिरस्कुर्वती आसे, मातः ।

**माता** – अहं नैव तिरस्कृतवती, केवलं निराकृतवती, तादृशीं उत्प्रेक्षां मा कुरु ।

**संजीवशिवः** – मां पश्यन्त्यां त्वयि न काचिदपि प्रीतिरस्ति ।

**माता** – सत्यं, तव दौर्बल्यानि नैव रोचन्ते मे । त्वं तावत् तनयोऽसि तथापि–

**संजीवशिवः** – उन्मत्ततापादकैः तर्कैः मार्गं भ्रामयसि मातः

**माता** – मरणोन्मुखानांकृते जीवनप्रदानं करोमीत्यहंकारोद्गिरणं करोषि । तदर्थमेव ते कारणशक्तिः मन्दीकृतास्ति, पुत्र !

**संजीवशिवः** – ते तावदन्तःकरणमेव नास्तीति जानाम्यहम् । तथापि त्वयि विद्यमानेन केनापि विशेषेण विमोहितोऽस्मि। न जानेऽहं कःस स्यादिति ।

– प्रायशः त्वं खलु भयानकः कश्चिदेकान्तः यस्य च नादिः नान्तश्च ।

त्वं खलु शून्यरहितो निर्दिगन्तः यत्र पवनो न पवते, प्रकाशकिरणो न लगति ।

**माता** – वत्स, तव शब्दानां सामर्थ्यस्य च यथायोग्यं त्वया च कृतमिदं मम वर्णनम् । मम निजस्वरूपं न ।

तथापि, एवं वर्णनं विदध इत्यहमपि त्वां नैव भणितवती ।

जीवनस्य विषये उभावपि तृषितौ,

अधिकाधिकान् जनान् पुनरुज्जीव्य
त्वं तावत् सन्तुष्यसि !
अहं तु अधिकाधिकान् जीविनो जग्ध्वा
आनन्दपरवशा भवामि ।
तव तावत् क्षुधा सुलभा विद्यत इति अहं जाने,
परं मम क्षुत् तावत् अत्युग्रा वर्तते, वत्स!
अस्मिन् लघुतरःअयःकण्डोलः इव दृश्यमाने
आकाशतले वर्तमानस्य लोकस्य पुरुषोऽसि त्वं तव
च क्षुत् अवगन्तुं योग्येति भावये,
परं मम तावत् दिगन्तविहीनो लोकः, पुत्र!
अत एव मम बुभुक्षा केवलं क्रूरतरा इत्येव दृश्येत ।

**संजीवशिवः** – मातः मम नेत्रयोः त्वमेवं दृश्यमाना असि इत्येव आश्चर्यास्पदमस्ति न ?

**माता** – अथकिम्ः तव नेत्राभ्या अहं स्वयं स्वात्मानमेव पश्यन्ती अस्मि ।
अत एव ते दृष्टिगोचरः अस्मि पुत्र !
अधुना, मम प्रश्नस्य उत्तरं देहि–
मम प्रतीपं तन्त्रं योजितवन्तौ युवां,
त्वं तथा मदनतिलकः, किं तदिति प्रष्टुं श्यक्येत?

**संजीवशिवः** – मातुः कृपां विना मम वैद्यवृत्तेः कृ ते अर्थः कोऽप्यस्ति वा नवा इति चिन्तनं कुर्वन्तौ आस्म ।

**माता** – वैद्यवृत्त्यै जनन्याःतावत् यथेच्छमेव प्रयोजनानि तावत् विद्यन्त एव ।

**संजीवशिवः** – तथैव जनन्यै अपि वैद्यवृत्या यथेच्छमेव साहाय्यमस्ति।
उदाहरणार्थं,
मात्रा ये जीवाः निगृह्यन्ते ते तावत् वैद्यैरेव निहन्यन्ते।

**माता** – परं जननी तावत् कदापि स्वहस्तेनैव नैव हन्तीति ते विदित एव स्यात् ।

**संजीवशिवः** – भीतिस्तावत् मातुःसकाशादेव किल?

**माता** – भीतिसदृशो भावः, अनुभावः अन्यः कोऽस्ति!
पुत्र मम भीत्या एव
अनूनकमपि चराचरं कथं सृजनशीलं भवतीति पश्य।
तव तत्त्वज्ञानं, सिद्धान्ताः, धर्मः, वेदान्तः
सर्वे मम भीतिजन्या एव ।
भीतिरियं किं किं न जनयति यत्र न किमपि वर्तते स्म।
विषाणकरालदंष्ट्रानां कथा,
अनुग्रहकारिण्याः अमरावत्याः कथा
दुःखतप्तायाः धरायाः कथा
इदं च मृत्युभयं जनितवत्,
कियन्ति वा चरित्राणि ।

**संजीवशिवः** – तथापि अत्रास्ति किञ्चिदेकं यच्च सकलसीमां तीर्त्वा अमरमजेयं भूतम् ।
यत् च कानने प्रवहतो नीरस्य रुचिः तथा स्वातन्त्र्ययुतम्
खगानां हृदयाय गानं, बालानां नयनयोः स्वप्नं, यत् पूरयति
भयस्यकृते अभयप्रदानं कृत्वा त्वां च अभिमुखीभवितुं (पर्यवस्थातुं) शक्तिप्रदायकम् शिवलिङ्गमिति ।

**माता** – शिवलिङ्गस्य वार्ता नाम वचनरचना इत्येव, पुत्र!
भवतु नाम, शिवं किमिति स्तुवथ?
नयनयोः विस्फुलिङ्गं स्थापितवानिति वा ?
निशाचरः स्मशानवासी, कुणपानां भक्षयिता इतिवा?

रजनीव कृष्णायितायां जटायां चन्द्रं तिरोधाय स्थितवानिति वा,
मारको देव इति वा ?
हरिद्वर्णधर्मवत्याः पार्वत्याः पतिरिति वा ?
ताण्डवदेव इतिवा
अरे रे पुत्र
त्रिषण्नवेति गुणितसंख्यावारं
विषमसंख्यातालेन नृत्यामि चेदहं,
आयोधनस्य तुमुलं निःशब्दं भूत्वा
भूमिं स्पृशन् पतति शिवः! दर्शयामि किम् ?
अहो पश्य तत्र तव मित्रस्य देशीयनाटकं प्रचलति विलोकय–
मार्कण्डेयः शिवलिङ्गं परिष्वज्य पाहीति
गीत्वा, महत् संभाषणं जल्पति, शृणु–
(संप्रति राजगृहे इदनीमेव प्रवर्तमानं मदनतिलकस्य "मार्कम्डेयविजय" इति नाटकस्य दृश्यं दर्शयति, शिवलिङ्गं परिष्यज्य स्थितो मार्कण्डेयः, तस्य कण्ठे पाशं विन्यस्य विकर्षन् यमः)

**मार्कण्डेयः** – हे जगन्नियामक–परशिव, परमात्मन् तव भक्तशिरोमणेः मार्कम्डेयस्यास्य दुःखसागरं वर्णयितुं सहस्ररसनस्यादिशेषस्यापि असाध्यमित्येव । त्वामेव दृढं विश्वस्य धृता शिवभक्तिः आचरिताश्च शिवाचाराः इत्थं नीरे तिन्त्रिणीकफलस्य प्रक्षालनमिव व्यर्थमेव व्ययीकृताः इति विलोक्य इतःपरं केऽपि, कार्षापणस्यापि दीपं नैव ज्वालयन्ति, करावुद्धृत्य नैव नमस्कारं कुर्वन्ति इत्ययं विषयः तव

वित्तिपथमायातः किम् तात? हन्त, अविहा परशिव परमात्मन् क्रूरोऽयं कालः मम आयुरवसितमिति स्वीयं यमपाशं मम गले बद्ध्वा विकर्षतितराम् । हे शिव, शम्भो, महादेव, मां अस्मात् कालात् विमुच्य, ''भक्तरक्षकः शिष्टपालकः'' इति ते बिरुदं त्वं न पालयसि किम् ? हे शिवशिव! अविहा महादेव!

**माता** – इतः पश्य तव शिववेषधारी शिवलिङ्गं विदार्य त्रिशूलं विस्फारयन् प्रत्यक्षोऽभवत् पश्य! साधुशिव! संप्रति सः ममाप्तं हन्यात् किल? गृहाण ..........
(इति उपविष्टा एव प्रहारं कुरुते शिवपात्रधारी म्रियते)
अरे, रक्षकः शिव एव मृतः पतितः स्ववेषधारिणं नटमपि वा तवशिवः रक्षितवान् स्यात्

**संजीवशिवः** – शिवः न एन्द्रजालिकः, मातः ।

**माता** – मूर्ख! नैदं एन्द्रजालिकं, घटितं सत्यम् । गत्वा पश्य।

**संजीवशिवः** – मदनतिलकः मृतः किम् ?

**माता** – एवमेव, तव त्रयस्त्रिंशत्कोटिदेवानपि द्वित्रैः कवलैः भक्षितवत्यहम्

**संजीवशिवः** – इयत्तां शक्तिमापन्ना त्वं, राजकुमारीं गिलितुं कष्टं भवति किम् ?

**माता** – तच्च त्वया वक्तव्यम् । तुभ्यं तावत् मम विनोदलीलायाः परीवर्तस्य प्रतीकं दर्शयामीति एवं कृतवती ।

**संजीवशिवः** – (सदुःखम्) हा हन्त मदनतिलक!
मम मात्रा कृतस्य स्वीयक्रूरानन्दानां वमनस्य फलस्वरूपेण त्वया मर्तव्यमभवत् किल!

मातः त्वां कामिति वदामि
बहुतरमपक्कानां जीविनां भक्षणाय सर्वदा विवृतवदनो नरक एव त्वम् ।

**माता** – नालं नालमनेन, पुत्र त्वं तावत् कोटिकल्पनाभिः कोटिशः वर्णनं करोषि चेदपि, मम विषये वक्तव्यमवशिष्टं भवति । तदेव लीलाजालम् । मम सुत इति ते तावत् सर्वापेक्षया अधिकाधिकमेव यद्यपि विदिता तथापि मद्विषये एतावत्पर्यन्तं ज्ञानिनंमन्याः यद्वदन्ति तदपेक्षया न किञ्चिदधिकं उक्तवान् त्वम् । दृष्टवान् किल तव शिवः कथं पतितोऽस्ति । त्वां च साधुपथमानेतुं यथेच्छमिदमस्ति । इदमपि यदि तीव्रतरं दुःखं दातुं न क्षमं चेत् कथय मे के के ते अत्यन्तमेवात्मीयाः वर्तन्त इति तेभ्य एव चित्रहिंसां दास्यामि ।

**संजीवशिवः** – ममात्यन्तमेवात्मीया नाम मम माता एव ।

**माता** – सत्यमेवोक्तं, पुत्र । सर्वमेतादृशं अहमपि अनुभवन्ती वर्ते तवकृते । मां च समवगन्तुं सर्वमिदं मार्गदर्शि भवेत् । स्मरसि किल ? श्वः सूर्यास्तसमयात् पूर्वमेव राजकुमार्याः गले यास्ति भैषज्यवीरुत् तां च निष्कास्य, मह्यं समर्पणीयास्ति । श्व एव तस्याः विवाहः तथा चरमघटिका, मूहूर्तस्तु निश्चित एव अहं तु प्रतिपालयामि ।

**संजीव** – क्षम्यतां, मातः, तन्नसंभवति ।

**माता** – तन्नाम, त्वं किं कुर्वन्नसि, जानासि किल?

**संजीवशिवः** – सुष्ठुतरेण जानामि । पुनरेकवारं कथयामि शुणु मातः, अहमेकवारं रोगिणो नाडीं धृत्वा चिकित्सां कृतवान्

चेत् रुग्णस्तु कथमपि जीवशेषो भवेदेवेति त्वयैव दत्तो वरोऽस्ति मे । तस्य पूरणं अपूरणं वा तव दायित्वम् । (इति निर्गच्छति)

# कुटिलो ग्रहचारः

(शिवस्य वेषेस्थिता मञ्जरी मृता पतिताच ।
मार्कण्डेयस्य वेषधारी मदनतिलकः रुदन् वर्तते)

**मदनतिलकः** – हा हन्त! हे मञ्जरि, मम मञ्जरि
अवशिष्टा त्वमेकाकिनी भार्या, त्वमपि यदा निर्गता
जीवितुं मम किमपि अवशिष्टम् नैव किल!
तव नामधेयमेव मम मुखे कियत् रुचिकरमासीत्
श्रोतुमपि कर्णयोः हितकरमासीत् ।
संप्रति कां तथारीत्या आकारयामि ?
हा हन्त, मञ्जरि ....... कियती भाग्यवती खलु त्वम् !
नूनं जन्मजाता कलावती,
नाटकं खेलन्ती कुर्वती एव वीरमरणं प्राप्तवती किल!
हर, हर इति तव वेषं या धृतवती आसीत् तामेव विच्छिद्य, भक्षितवान् खलु, शिव!
(सहानुभूतिं सूचयितुं मदरङ्गी तावत् आगत्य, दूरे तिष्ठति । मदनतिलकस्तु तां पश्यन्, रुदन् एव एवं भणति ।)
एहि साध्वि, मदरंगि, समाधानवचनं भणितुं आगता किल? मां परिणीतवतीत्येव सुवासिनीनिधनं प्राप्तवतीयं पुण्यवती ।
कासां वर्तते कासां न विद्यते ?
निकटमायाहि, अवलोकय, कथं वा सुप्तवतीयं महाशये!

त्वमपि वा भवतु चरमे अस्य हतभाग्यस्य सकाशमागत्य, सहानुभूतिं नैव प्रदर्शयेद्वा । दुःखतप्तस्य मे नयने प्रमार्ज्य मम मुखं तव उरस्थले विन्यस्य समाधानवचनं भणसि चेत् मा इति कथयामि किम्?
(मदरंगी आगत्य उपविष्टा मञ्जर्याःभूतः तन्नाम तस्याः कुणपः मदरङ्गीं विलोक्य उत्थायोपविश्य मात्सर्येण ज्वलन्ती ज्वलन्ती सङ्कटमनुभवति । भूतस्वरूपे सूक्ष्मशरीरे वर्तमाना उभाभ्यामपि न दृष्टा भवति । संजीवशिवस्य आगमनपर्यन्तं उभयोरपि संभाषणं शोकसरण्यामेव प्रचलति । भूतस्तु कालोचितां प्रतिक्रियां प्रदर्शयन् एव तिष्ठति ।

**मदरंगी** – अविहा अविहा, वराई कीदिसी पुण्णवई, कहं वा सा मिया खु नूणं दुद्देव्वं ..............
(अविहा अविहा, कीदृशी पुण्यवती सा, कथं वा मृता नूनं दुर्दैवम् ..........)

**मदनतिलकः** – कीदृशं दुर्दैवमिति भणसि! सा यस्मिन्दिने अद्य, मृता, एकोऽपि मन्त्री नैव मृतः कविरपि नैवमृतः, कोऽपि राजा नैव मृतः, इतोऽप्यधिकं दुर्दैवं अपेक्ष्यते किम् ? प्रतिदिनं मनसि, स्वप्नेच, मदरङ्गीमेव स्वाप्नवचनैः वल्लभे, ध्यायामीति असूयावृत्या मृता खलु ?

**मदरंगीः** – अलियं! (अनृतमिदम्)

**मदनतिलकः** – कुणपस्य पुरतः कोऽपि मिथ्या वदति किं रे?

**मदरंगी** – जइ तहा त्ति हवइ ममं मोत्तूण तां किमत्थं बन्धिऊण ठियं? (यदि तथा चेत् मां विहाय तां किमर्थं बन्धितवान्?)

**मदनतिलकः** – मां परिणीतवती नवमी भार्या एवं निधनमुपेयात् इति ग्रहचारनिरूपकग्रन्थे आसीदेव दयिते, अत एव प्रथमं इयं पीडा कथमपि परिहृता भवेदिति इमां परिणीतवान्, नो चेत् त्वया एव एवं मर्तव्यमासीत् ज्ञातं वा ?

(इदानीं भूतस्य प्रतिक्रिया तीव्रतरा भवति)

**मञ्जर्याःकुणपः** –अले, अले, बालिस, दासीए पुत्त (अरे अरे बालिश, दास्याःपुत्र)

**मदनतिलकः** – इदानीमपि मम वचने ते विश्वासो नैव किल? अविहा, शिव शिव, एवं विश्वासहीनजीवनापेक्षया मरणमेव श्रेयस्करमित्यस्ति किल । मञ्जर्याः मरणापेक्षया ममैव निधनमानीतं चेत् सुष्ठु स्यात्?....

**मदरङ्गी** – तुमं ताव मत्तुं इच्छसि । घरं मच्चुदेवायाए अणुमई दायव्वा खु बुड्ढ ।

(त्वं तावत् मर्तुं इच्छसि । परं मृत्युदेवतया अनुमतिः देया किल ।)

**मदनतिलकः** – परह्यः स्वप्ने साप्यागता खल्वम्ब । 'मां मारय खलु अम्ब' इत्युक्तवान् । अपरां युवतीं शासित्वा एहि पुत्र इत्युक्तवती खल्वम्ब ।

**मदरंगी** – तुज्झ कए जुवई खु पावियव्वा बुढ्ढ! (तवकृते युवती खलु प्राप्तव्या वृद्धापसद)

**मदनतिलकः** – उदारमनसा यदि त्वमपि लभसे चेत् अलं अलम् ।

**मदरंगी** – बुढ्ढावसय! हं ण जुवई तुमं ण जुवय । (हे वृद्धापसद अहं न युवती त्वं च न युवकः)

**मदनतिलकः** – त्वमेव उदारचित्तं कृत्वा यदि आगमिष्यसि तदा त्वमेव ज्ञास्यसि यदहं वृद्धो वा युवको वा इति । उभावपि प्रेमयोगेन वर्तावहे चेत् मत्कृते त्वमेव हसन्मुखी

हरिणाक्षी त्वत्कृते अहमेव कमलाक्षो? देशीयो जातोक्षः।

**मदरंगी** – अव्वो! सिवो! कित्तियं सुन्दरं वयणं भणइ एसो (अव्वो शिव, कियत् सुन्दरं भणति एषः)

(संजीवशिवः आगच्छति)

**संजीवशिवः** – (साश्चर्यं) आर्य, किमिदानीमपि त्वं जीवितोऽसि ।

**मदनतिलकः** – किमर्थ? मया मर्तव्यमासीद् वा?

**संजीवशिवः** – ह्यः रात्रौ त्वं शिवस्य वेषं धृतवान् ननु?

**मदनतिलकः** – धृतवानासम्

(मञ्जर्याः कुणपः उत्थायागत्य– अलियं भणसि मे तक्करदासीए पुत्त!''(अनृतं भणसि मे तस्करदास्याः पुत्र!) इति मदनतिलकस्य कपोलं अङ्गुल्या तुदति)

**मदनतिलकः** – नैव नैव, शिवस्य वेषं धृतवानहं न, मञ्जरी धृतवती। (अधुना मञ्जर्याः भूतः गत्वा पुनः कुणपो भवति)

**संजीवशिवः** – चरमक्षणे परिवर्तितम् किम्?

**मदनतिलकः** – अथकिम्?

**संजीवशिवः** – किमर्थम् ?

**मदनतिलकः** – स्वामिन्, मञ्जरी हठं कृतवती ।

शिवस्य वेषं बध्नामि चेदेव अहं जीवामि, नो चेत् तटाके वा कूपे पतिष्यामीति भायितवती महाशय!

(मञ्जर्याः कुणपः अनेन सृष्टमनृतं श्रुत्वा सविस्मयं 'अहो' इति मुखं पिहितवान्)

अरे मञ्जरि, शिवस्य संभाषणं तथा गानं ते नायाति, हठं मा कार्षीः'' इत्यभणम् ।

यत् किमपि उक्तमपि नैव श्रुतवती ।

चरमे वेषं परिवर्त्य मञ्जर्याः कृते शिवस्यवेषं धारयित्वा

अहं तावत् मार्कण्डेयः अभवम् । अग्रे तावत्, यदा शिवः मृतः पतितः, तदा 'अहोऽऽ' इति भणितवान्। अयमेव घटितः सन्दर्भः स्वामिन् !

**मञ्जर्याःकुणपः**–(उत्थाय, आगत्य) अरे रे, चोर ! दृष्टं किल, समयोचितं कथं वा बडिशं निक्षिप्य अनृतानि आकर्षति! अरे, तिर्यग्जात! मिथ्या प्रलपसि वा? स्वामिन् इयानेन घटितःसन्दर्भः– एषः शिवः, अहं च मार्कण्डेयो भूत्वा इतः किं नाटकं आरम्भणीयमेवासीत्, अत्रान्तरे कापि करालवदना मारिकाम्बा आगता, तस्याः मुखं अन्धकारादपि कृष्णतरमासीत्, लवित्रमिव शिखरिदशनः आसीत्, विषाणमपि आसीदिव अभात् । विस्तारिते रक्तनयने विकृतः करालस्मश्रुः, कुरङ्ग इव प्लुतिमाधाय, आगता– "शिवः त्वमेव किम्?" अय्य! इति भणितवती । एतवता एव अस्य शिवस्य अर्धोरुकं आर्द्रमभवत्, पश्यत! अयं च सभयमेव "देवि! का त्वम्? कस्मादागता, नैव ज्ञायते" इत्यवदत् । तस्य प्रतिवाक्यमिव–

किं पुरातनो मैत्रीभावः विस्मृतः किम् ? अय्य! अद्य खलु उभाभ्यामपि मायिनीशैलं प्रति गन्तव्यमस्ति किल । ननु तव माता त्वां आकारयति, वत्स! इति उक्त्वा पर्वतप्रायं अट्टहासं कृत्वा तिरोहिता अभवत् पश्यत! अयं चः गडगडेति कम्पमानः मम हस्तपादौ गृहीत्वा "इयं तु कापि पुराणी मारिकाम्बा, दयिते! खेलां नाशयित्वा त्यजति, अतः वेषं परिवर्तावहे" इति दीनं याचितवान् । मम तावत् शिवस्य संभाषणं,

गानं नैवायातीति उक्तेऽपि सः नैव श्रुतवान् । अहमेव सर्वं निर्वहामीति भणित्वा मम प्रतिवचनार्थमवकाशं अदत्वा एव, समयो जात इति त्वरां कृत्वा वेषं परस्परं परिवर्तितवानेव । अहमपि प्रतिश्रुत्य शिवस्य वेषं धारितवती । मया च कृतो मन्तुः अनन्तरमेव ज्ञातम् । एका करालाकृतिः राक्षसी तावत् दूरे उपविष्टा आसीत् । म्रियताम् शिवः'' इत्युच्चैः उद्घुष्य वेगेन काष्ठं समाकृष्य मां प्रति प्राक्षिपत् इत्येवचिरं, मयि स्पृशति तस्मिन् मृता पतिता एवाहम् ।

(मदनतिलकं पादेन ताडयन्ती)

मम तावत् दौर्भाग्यं, अस्य अस्य अयोग्यस्य कृते मया तावत् मर्तव्यमासीत् । सहजमेव, मौनेन यदि मार्कण्डेयस्य पात्रे अभविष्यम् तदा जीवन्ती अहं मदरंग्याः हस्तेनैकेन एकवारं प्रतिक्रियां अकरिष्यम्

**संजीवशिवः** – तन्नाम त्वया धरणीयं वेषं सा धृत्वा, त्वयि आपतत् मरणं सा गृहीतवतीत्यर्थः किम् ?

**मञ्जरीकुणपः**–अस्य अयोग्यस्य कृते तथैव भणन्तु ।

**मदनतिलकः** – तथा न, तस्याः निधनं एवमेव भवेत् इति ग्रहचारग्रन्थे (दैवग्रन्थे) आसीत् खलु, तात !

**मञ्जरीकुणपः**–पुनश्च मिथ्या वचनं (पादप्रहारं करोति)

**संजीवशिवः** – इयं का ?

**मदनतिलकः** – इयं मदरङ्गी समाधानं सहानुभूतिं सूचयितुमागता । वराकी, इयं मञ्जरी मृता इति मम दुःखं नाभवदिति मा मंस्थाः । तवागमानात् पूर्वमेव, पातं पातं रुदितवान्, हिक्कां कारं कारं रुदितवान् भूमौ विलुठंन् क्रन्दितवान्, स्तावं स्तावं रुदितवान् अस्ति खलु, मदरङ्गि ?

**मञ्जरीकुणपः**–पुनश्च अनृतम्

**मदनतिलकः**– किमर्थं पादेन ताडयसि? मम वचने विश्वासो नैवागतः किम् ?

**संजीवशिवः** – मया नैव पादप्रहारः कृतः तात, । तव दुर्दैवं पादताडनं कुर्वदस्ति ? (इति निर्गच्छति)

# समाकृष्य आनयत तौ

(ततः प्रविशतः वैद्यशालायां माता तथा गिरिमल्लिका)

**माता** – गिरिमल्लिके, संजीवशिवः तथा राजकुमारी–एतयोः विषये सूक्ष्मेक्षिकया अवलोकनं करोषि किल ।

**गिरिमल्लिका** – निर्निमेषाभ्यां नयनाभ्यां तयोः गमनागभनयोः अवधानं ददती अस्मि, अम्ब ।

**माता** – संजीवः कुत्र कथं वर्तते? किंवा कुर्वन् आस्ते? सविवरणं कथय ।

**गिरिमल्लिका** – समयस्तु अतीतो भवतीव शङ्कया त्वरिततरगत्या राजगृहमागत्य त्वरितमेव राजकुमारी यत्रास्ते तत्र गतः। अयं च गत्वा किमपि उक्तवानेव, सा तु स्वयं मृत्योः राजसदनं प्रति प्रस्थिता तथा मृत्योः प्रतिमुखीकरणं तावत् संजीवशिवस्य भार्यायाः मे कर्तव्यमिति सा निर्धारितवती एव मातः ! तस्याः मुखे कापि उद्विग्नता नैवासीत् । मृत्युविषयकं वचनमाकर्ण्य अशौचं जातमितीव शिरोरुहाणां ग्रन्थिं विमुच्य पश्चात् भागे स्रस्तधम्मिल्ला अभवत् । संजीवशिवं प्रतिपालयितुं भणित्वा, स्नात्वा आगन्तुं स्नानगृहं गता । शुद्ध्यर्थं स्नात्वा, शुचिःभूत्वा दर्पणस्य पुरतः स्थित्वा बृहदाकारं तथा स्पष्टमेव कुङ्कुमं धृतवती । गले स्थितां भेषजलतां कुङ्कुमं लिप्त्वा नयनयोः नोदितवती। शिरसः आञ्चलात् भूतलस्पर्शक-कच्छपुटपर्यन्तं, सुवर्णाञ्चलपट्टिकान्वितां चन्द्रकालीसीरिकां यथाकथंचित् धृत्वा, नीलकूर्पासं

धृतवती । केशप्रसाधनं कृतवती यद्यपि, तथापि केशान् एकीकृत्य कबरीं कर्तुं सा नैव शक्ताभवत् । तदजानन्तीं क्लेशमनुभवन्तीं तां विलोक्य अहमेव वेणीबन्धं कृत्वा जातिकुसुमैः केतकीपत्रैश्च भूषयामीति वाञ्छा जाता मयि । परं मातः, कथमपि प्रयासेन मम आशां निगृहीतवती । संजीवेन दत्तं चम्पकपुष्पं सा एव पुनरेकवारं भूषितवती । तथैव तस्याः प्रसाधनविधिं वीक्ष्य मयि तावत् हासः, तथा नेत्राम्बूनि बहिः निर्गतानि ।

**माता** – अग्रे कथय ।

**गिरिमल्लिका** – तदनु स्वजनन्याः वर्णचित्रस्य पुरतः स्थित्वा घृतदीपं प्राज्वालयत् । "अम्बे, पतिगृहं प्रति प्रस्थितास्मि, आशीर्वादं कुरु" इति भालं भूतले स्पर्शयित्वा नमस्कारमकरोत् "बैद्यं पश्यन्ती, तत्क्षणमेव समाकृष्टाहम् । तदनु वचसि प्रवृद्धे सति, स एव मे अधिकाधिकं अर्हः इति दृष्टः, परं वचनात् पूर्वमेव आवयोः आत्मानौ परस्परौ निकटमागतौ । मम मरणानन्तरं मम पत्युः कृते दीर्घायुष्यं तथा मत्सदृशीं प्रीतिं कुर्वतीं द्वितीयां द्वितीयां देहि" इति भणन्ती एव दुःखस्य सीमाबन्धः भिन्नः, धाराकारेण पतति अश्रुजले सा क्लिन्नाभवत् मातः । ममापि नेत्रयोः अश्रुबिन्दवः पतिताः अग्रे किमभवदिति नैव दृष्टम् ।

**चेटी** – (त्वरिततया प्रविश्य) महामातः राजकुमारी तथा संचीवशिवः द्वावपि नैवदृश्येते ।

**माता** – किमुक्तवती ?

**चेटी** – अथकिम्, महामातः । द्वावपि इदानीमेव अश्वमारुह्य

प्रस्थितौ । इत एव प्रस्थिताविति, अस्माकं च कार्यं सुलभमेव जातमिति तूष्णींस्थिताः । परं काननं प्रविशन्तौ एव अजानेयं (अश्वं) वेगेन धावयित्वा गहने कान्तारे दृष्टेरगोचरौ संवृत्तौ ।

**माता** – गिरिमल्लिके, सवेगं अनुधाव्य निगृह्णीत तौ । अस्माकं यत् प्रबलं बलादिकमस्ति, तत्, तथा बहूपायान् च उपयुज्य तौ समाकृष्य आनयन्तु ।

## कलुषितं गगनतलम्

(कान्तारं, संजीवशिवं तथा राजाकुमारीं अन्विष्यन्त्यौ द्वे कराल मारिके (सेडमारिके) प्रविशतः)

**प्रथमा करालमारिका** – अत्रेमानि वस्तूनि किमर्थं गतगुरुत्वाकर्षणमिव इतस्ततः स्रस्तानि पतन्तीव दृश्यन्ते ।

**द्वितीया करालमारिका** – जतुकास्तु पद्भ्यां तिष्ठन्ति । मयूराः अधोमुखाः वृक्षशाखायां लोलायन्ते ।

**प्रथमा करालमारिका** – जीवराशयःसर्वे तु स्वं स्वं धर्ममतीत्य स्वभावविरुद्धं आचरन्तः सन्ति । ग्रामे नैव दृष्टं किम्?

क्रीडालवो बालकाः – वृद्धा भूत्वा भविष्यं वा नीतिं बोधयन्ति।

**द्वितीया करालमारिका** – निर्गता, धृतजीवाश्च वेषंच भूषणादिकं तथा स्थलानिच परस्परं परिवर्तयन्तः परस्पराणां वचनगमनादिकं चोरबुद्धया अनुकुर्वन्तः आसन् ।

**प्रथमा करालमारिका** – भूमिः आकाशश्च उभावपि सुष्ठु न स्तः क्वथितौ तुमुलेन च, कुणपभक्षकाणां कृते

वातावरणमिदं तावत् हितकरमेवास्ति । शीघ्रं एहि अन्विष्याव: ।

(तिरोहिते भवत:, राजकुमारी तथा संजीवशिव: इतस्तत: पश्यन्तौ, तिरोहितौ भवन्तौ आगच्छत:, स्थलं यदा सुरक्षितमिति भाति तदा उपविष्टौ)

**राजकुमारी** – अत्र किञ्चित् विश्रन्तिमनुभवाव: किम्?

**संजीवशिव:** – आवामिदानीं तावत् अस्माकं संवसथसीमां लंघयित्वा, समागतावेव । चरमपक्षे अस्तमनवेलापर्यन्तमत्र उषित्वा तदनु प्रस्थातुं शकेव। आयासो जात: किं राजकुमारि?

**राजकुमारी** – मम नामधेयं तावत् इरुवन्तिका इति, न तु राजकुमारीति।

अतीव आयासो अनुभूयते स्वामिन् !

जलजलेति स्वेद: वर्षन् आस्ते, न पश्यसि किम्?

**संजीवशिव:** – (स्वेदं संमार्जयन्) सुखानि अनुभूय क्रीडन्त्या: ईदृशा: कष्टनिष्ठुरदशा: नैव पतितव्या: स्यु इरुवन्तिके!

(राजकुमारी तथैव तस्योरसि लम्बिता भवति । यदा च स: एतस्या: स्वेदं सम्मार्जयन् आस्ते तदा एषा तस्य हृदयस्य स्पन्दनं शृण्वन्ती–)

**राजकुमारी** – कोऽपि शैलाटवीप्रदेश: किल तव जन्मन:!

**संजीवशिव:** – अथकिम् । योगीकन्दर: ।

**राजकुमारी** – तत्रैका नदी प्रवहतीति उक्तं किल त्वया?

**संजीवशिव:** – अथकिम् । विरुद्धदिशयो: प्रवहन्त्यौ द्विस्रोतस्वती स्रवन्ती खलु सा ।

**राजकुमारी** – साच स्रोतस्वती तावत् इदानीं तवोरसि प्रवहन्ती वर्तते । सरभसं प्रवहन्ती कन्दरस्य वक्रतायां

विरुद्धदिशयोः स्रोतद्वये विभक्ता, उभेऽपि स्रोतसी एकैकवारं संघट्टिते भूत्वा घर्षिते च पृथग्भवती स्तः

**संजीवशिवः** – इरुवन्तिके, पश्य तत्र सूर्यास्तमनवेला दृश्यते । संप्रति प्रस्थितौ भवावः किम् (इति प्रस्थितौ, करालमारिके प्रविशतः)

**प्रथमा करालमारिका** – यस्मिन् क्षणे तौ प्रस्थितौ तस्मिन्नेव क्षणे आवामपि अन्वेष्टुं प्रस्थितौ, तथापि तयोः सूचना नैव लभ्यते किल!

**द्वितीया करालमारिका** – अरण्यहतक! अस्मिन् कान्तारे सर्वत्र मार्गा एव दृश्यन्ते । कस्मात् वा मार्गात् पलायितौ नैव ज्ञायते!

**प्रथमा करालमारिका** – समग्रमपि काननमिदं दुःस्वप्नमिव भाति।

**द्वितीया करालमारिका** – आकाशे एकापि तारा नैव स्फुरति ।

**प्रथमा करालमारिका** – सर्वेऽपि वृक्षाः तमसि निमज्य उद्धृता इव भान्ति । कोऽपि अन्तर्हितः इव अभात् ।

**द्वितीया करालमारिका** – कोऽसौ अन्तर्हितः? बहिरागच्छत! यत्र यूयं अन्तर्हिताः तत्र मातुः दृष्टिः लग्ना भवतीति विदितं भवतु ।

**प्रथमा करालमारिका** – मातुःहस्ते यत्किमपि वा लब्धं भवतु तत्तु आयुधं भविता इति अवगच्छत ।

**द्वितीया करालमारिका** – इत आगच्छत ।

**प्रथमा करालमारिका** – बहिरायात ।

**द्वितीया करालमारिका** – न कोऽप्यस्ति । तौ कुत्रापि दूरं गतौ ।

**प्रथमा करालमारिका** – कियदपि दूरं गच्छतां, मातुः कृते समीपे एव ।

**द्वितीया करालमारिका**– राजकुमारी तावत् अतीव सुन्दरीति कथ्यते

**प्रथमा करालमारिका** – सर्वं अनृतं, दीर्घकालस्य रोगिणी खलु सा। तादृशी शुष्कीभूता यथा पुनश्च नैव पल्लविता भविता ।

**द्वितीया करालमारिका**– मातुः नैवेद्यं भवति चेत् अलम् । तत्र कोऽपि शब्द इवाभूत् एहि (अन्विष्यन्त्यौ गच्छतः)

(ततः प्रविशति राजकुमारी तथा संजीवशिवः)

**राजकुमारी** – त्वं तावत् तं पक्षिणं साक्षादेव दृष्टवान् किम्?

**संजीवशिवः** – तद्विषये साक्षादेव श्रुतमस्ति नतु साक्षादेव दृष्टोऽस्ति।

**राजकुमारी** – स कूजति किम् ?

**संजीवशिवः** – अहं नैव श्रुतवान् परं ये श्रुतवन्तः ते तु तस्य ध्वनिः भयोत्पादको भवति, एकस्मिन् एव पर्याये यदि कूजति चेत् शतानां घूकानां क्रन्दनमिव भवतीति वदन्ति ।

**राजकुमारी** – अहो, तत्र पश्य, अन्तरिक्षस्य पार्श्वे बृहदाकारः पाषाण इव किमपि दृश्यते किल, स एव स्याद्वा

**संजीवशिवः** – सतु महावटवृक्षः ।

**राजकुमारी** – तन्नाम, स किं वृक्षे नैव निवसति?

**संजीवशिवः** – तस्य भारं सोढुं वृक्षे शक्तिरपेक्ष्यते खलु ।

**राजकुमारी** – श्मशानमेव चितमस्ति वासार्थं! आश्चर्यं किल!

**संजीवशिवः** – उदरंभरणार्थं अपेक्ष्यते किल,
कुणपं ये धृत्वा आयान्ति तान् पलाययित्वा तान् कुणपान् दन्तैः धृत्वा नयती त्युच्यते । इमं ये दृष्टवन्तः तैरेवोक्तम् ।

**राजकुमारी** – तव वर्णनमुपश्रुत्य इदमेवं भाति यत् स च विहङ्गमः भयङ्करः इत्यत्र नैव सन्देहः परं तच्चस्थलं तावत् तस्य विहङ्गमस्य कृते नैव योग्यमिति वक्तव्यमेव।

किमपि वा वदतु एतादृशसुन्दरहरित्प्रदेश एतादृशो भयङ्करः पक्षी वसतीति कल्पयितुमपि नैव शक्यते ।

**संजीवशिवः** – बहवश्च जनाः तं पक्षिणं तत्रैव दृष्टवन्तः इत्युच्यते । परं तैःकैरपि तच्च स्थलं नैव सुन्दरं इति दृश्यते ।

**राजकुमारी** – द्रष्टुं कथमस्ति सः? गृध्र इव किम्? आहोस्वित् कोऽप्यन्यः पक्षीव वा ?

**संजीवशिवः** – महान् पक्षीत्येव । पक्षौ स्तः, पादौ स्तः परं तत् किमपि नैव स्मर्यते । केवलं क्रूरे तस्य नयने एव दृश्येते इत्युच्यते । स तु अस्मान् पश्यन् आस्ते इति ये जानन्ति ते तावत् तत्रैव मृता भविष्यन्तीत्युच्यते । अधुना, यास्यावः किम् ?

**राजकुमारी** – तिष्ठ, त्वां प्रति एकवारं नमस्कारः करणीयः ।

**संजीवशिवः** – किमर्थम् ?

**राजकुमारी** – किमिति चेत् त्वं तु मे पतिः अहं तु ते पत्नी, जायपती इत्युक्तौ एकवारमपि वा नमस्कारः करणीय एव किल । (नमस्कारं कृत्वा) संप्रति याहि ।

(इति प्रस्थितौ, गत्वा गत्वा, अपरं प्रतिभयं परं विचित्रं यत् कान्तारं तत्र आगतौ)

**राजकुमारी** – मार्गो भ्रष्ट इति अत्रागतौ किम् ?

**संजीवशिवः** – तथा न भवेत् ।

**राजकुमारी** – कीदृशः प्रदेशः एषः?

प्रभञ्जनो वाति, वृक्षपत्राणि मुखमापतन्ति ।

कस्यापि छाया

तृणोपरि चौरपदन्यासेन सञ्चरन्तः सन्ति किल नीहाराकृतयः तत्र पश्य पश्य पुरतः एव प्रकटिताः, आवां प्रत्येव चलन्त्यः आयान्ति ।

(भूताः एतयोः समीपमागत्य समूहेन उच्चैः स्थिताः भवन्ति)

**कीर्तिशिवस्यभूतः**– तात, संजीवशिव, अहं तु तव पिता कीर्तिशिवः संप्रति भूतोऽहं जातः । वयं सर्वे भूताः अत्र युवां आशिषो दातुं आगताः ।

**भूताः** – बालौ, मा भैषीयास्तां वयमपि भवादृशा इव आयोधनं कृत्वा नष्टप्रायाः सत्याग्रहस्य आयोधनं कुर्वतोः भवादृशयोः आशिषो दातारः । भगवतः नेत्रे न स्तः न कर्णौ, आहोस्वित् तेषामपि देवानां अनेकाः समस्याः भवेयुः, आहोस्वित् तेऽपि स्वयमेव कृतं जगत् परिहारैः परिवर्तयितुं अशक्ताः परतन्त्राः। तथापि व्यतीतेष्वपि संवत्सरेषु, युवयोः धैर्यविषये तथा मातुः क्रौर्यविषये, किंवदन्ती प्रसृतास्ति, इति स्मृतिपथे तिष्ठतु । तात, बालमित्र,

अग्रे आगच्छतु तात,

डयमानं पत्रमेव वाताट इति भावय तात, वर्णमयो वाताट एव पुष्पकविमानं तस्य चालकः त्वमेवेति भावय,

संप्रति विमानं चालय,

आकाशस्याङ्गणे सुवर्णचूर्णे खेलित्वा,

वर्णमयमाकाशमारुह्य, लतासु दोलनं कृत्वा .....।

वयमपि एवमेव दोलाखेलां कृतवन्तः, तात,

अहंकारं प्रज्वाल्य हुंकारं कृत्वा

अन्तरिक्षे वेगेन धावित्वा ताराः विस्फूर्य

ग्रहेषु अवतीर्यारुह्य

दिनं, रात्रिः, मासः, संवत्सराः

श्रान्तिपर्यन्तं हसित्वा, व्यतीतवन्तः, तात !
सा तत्रैव कुत्रापि आसीत् सा तावत्
जीवन्ती अपि शून्या, नयनयोः अगोचरः
गोचरीभूता अपि, अप्रत्यभिज्ञाता,
अस्तीति भूत्वा, असद्भूतस्वप्नः इव,
भयमिव अथवा इदानींतना अस्मत्सदृशाः
तदनन्तरं वातवती स्वीयं प्रभञ्जनं चक्रवातं चास्माकं
वाताटानामुपरि, पटपटेति सूत्राणि छिन्नानि आकाशे
तरन्तस्तरन्तः पतिता वयं नदीतीरस्थितसिकतासु ।
तरङ्गायितासु वालुकासु वालुकास्वरूपमापादितुं न
चिरायितम् ।
संप्रति एवं स्मः, एवं च छायाः इव
तिरोहिताः,
युवयोः साहसकृत्यं दर्शं दर्शं,
साधुवादं वदन्तः, हस्तमुद्यम्य
आशिषो ददतः,
एतावत् पर्यन्तं ये मृताः वयं तेषां बलं
देवानुदेवतानां च यद्बलं
तत्सर्वं युवयोः भवतु, वत्सौ,
हठस्तु मनुष्याणामेवास्तु ।

**संजीवशिवः** – अतीव उपकृतौ स्वः पितरः ।
अस्माकं कृते अवशिष्टायां रात्रौ
अटव्यां सर्वत्र संचर्य,
आवामपि चरमायोधनं दातुमुद्युक्तौ
सर्वान् आमन्त्र्य, भवतां सान्निध्ये आगमिष्यावः ।
भवतां कुलगोत्रकीर्तेः यदुचितं तादृशं

आन्दोलनं करिष्यावः ।
अत्र सन्देहो मास्तु ।
आवां तावदिदानीं आयास्यावः पुनरागमनाय ।
भूयो भूयो नमावः ।
(संजीवशिवः राजकुमारी च नमतः, भूताः हस्तौ उद्धृत्य आशीर्वादं कृत्वा तिरोहिता भवन्ति । शनैः अग्रे गच्छतः'' अत्रान्तरे देवालयस्य घण्टानादः श्रूयते तदनु गीतं श्रूयते)
सोऽऽ वदत शुभं वदत
मङ्गलं शुभमङ्गलं वदत ।
अम्बां सुवर्णां राजकुमारीं
शृङ्गारश्रियं शुभमङ्गलं वदत

**संजीवशिवः** – कृपया, मुखं पिधेहि

**राजकुमारी** – त्वं कं प्रत्युक्तवान् ?

**संजीवशिवः** – त्वां प्रत्येव ।

**राजकुमारी** – मया नैव गीतं तत् ।

**संजीवशिवः** – एवं किम् ? (स्पृत्वा) सत्यं, त्वया यद् गीतं तत् नैव श्रुतं किल ।
इतोऽपि निकटतरं इतः एहि । मम माता तव मुखेनापि गातुं समर्थास्ति ।

**राजकुमारी** – स तु तव मातुः ध्वनिः नास्ति? अस्ति किल ।

**संजीवशिवः** – तथा चेत् भूतानां गानं स्याद्वा ।

**राजकुमारी** – एतादृशे शीतप्रकोपेऽपि तव माता आयाति वा ?

**संजीवशिवः** – तस्याः कृते शीतो वा उष्णो वा नैव भवतः । वृष्टिः, अग्निः, वायुः वा तां नैव स्पृशन्ति । प्रकशोऽपि ।

**राजकुमारी** – अहो तस्याः ध्वनिः श्रुतः किल !

**संजीवशिवः** – अथकिम्, तस्या एव ।

**राजकुमारी** – तदा बहुदूरात् आक्रन्दितमिव श्रुतम् इदानी, पार्श्वे एव मन्दोक्तमिव श्रूयते किल ।
(मुखं पिधाय, स्थातुं संज्ञां करोति)
पश्य संप्रति बहुदूरात् हसन्ती वर्तते । गता इति भाति।

**संजीवशिवः** – यत्र कुत्रापि अनेके जनाः हसन्तः इव सन्ति । आवां तु कस्मिंश्चित् ग्रामे आगतौ इति भाति किल। तदा यत् श्रुतं तत् शोभनपदं किल, इदानीमपि श्रूयते किल ?
अत्र कुत्रापि विवाहः प्रवर्तत इव भाति

**राजकुमारी** – अहो पश्य तत्र ऋजुकमेव दृश्यते किल एकं गृहं, तत्रैव प्रवर्तत इव भाति । आवामपि तन्मध्ये एव मिलितौ भवावः ।
(चलति, तत्र द्वारं दृश्यते)

**संजीवशिवः** – सम्यक्तया शृणु,
अत्र तव नामधेयं आकाशमल्लिका,
मम नामधेयं चम्पकरामः, ज्ञातं किल !
विस्मृत्यापि आवयोः
पूर्वनाम्नी नैव भणितव्ये ।

**राजकुमारी** – भवतु नाम!

**संजीवशिवः** – अन्तः के सन्ति, ते कृपया द्वारं उद्घाटयन्तु ।
(शनैः द्वारं उद्घाट्यते, झटित्येव स्फुरन् प्रकाशः सर्वत्र गेहे प्रविशति । स चैको वैविध्यमयेन प्रकाशमानैः सहस्रज्योतिर्भिः भयङ्करं दृश्यमानो लोकः। दीपशरावाणां आकारास्तु समाना एव ज्योतिषां

गात्राणि तावत् एकेन सदृशमपरं न परस्परमेव विभिन्नानि सन्ति । उच्चैः स्थाने सिंहासनमेकमस्ति। तस्य पुरतः अधोभागे प्रत्येकमेव, परं स्पष्टं दृश्यमानौ द्वौ दीपशरावौ वर्तेते । तयोः एकस्तु प्रकृष्टप्रकाशेन ज्वलति अपरस्तु मन्दं मन्दं ज्वलति । इदानीं संजीवशिवः स्वं परितो दृष्ट्वा आघातहतो भवति । अत्रान्तरे राजकुमारी तिरोहिता वर्तते सा स्वेन सह न वर्तत इति, तथा गिरिमल्लिका द्वारमुद्धाटितवती इति दिग्भ्रान्तो भूत्वा असहायको भूत्वा साक्रोशं भणति।)

**संजीवशिवः** – कैतवं कैतवम् !

**गिरिमल्लिका** – पुत्र संजीवशिव, नामधेयं परिवर्त्य मात्रे वञ्चनां कृत्वा एवं पलायनं कर्तुमर्हसि वा?

**संजीवशिवः** – आवां तु अटव्यां यद् धावितवन्तौ तत्सर्वं अत्र आगन्तुं किम् ?

**गिरिमल्लिका** – सत्यं वक्तव्यं चेत् मायाशैलं विहाय युवां दूरं नैव गतौ, तात! तावत्समय-पर्यन्तं युवां मायाशैलस्य प्रदक्षिणां कुर्वन्तौ आस्ताम् इत्येव ।

**संजीवशिवः** – (साक्रोशं) इदं तु अतीवान्यायः ।

**गिरिमल्लिका** – त्वं किमपि वा आक्रोशनं करोषि, तथापि कस्मादपि कोणात् न कापि सहानुभूतिसहितां दयां नैव लभसे। किमर्थमिति चेत्, अयंतु न मानवलोकः । एवं उन्मत्तप्रलपितं कुर्वन् भवसि, एकवारं द्विवारंवा श्रुत्वा बहिः निष्कास्यसे, आहोस्वित्, तव शब्दं निश्शब्दं कारयितुं शक्नुमः । इतोऽपि अधिकं प्रतिफलं नैव लभ्यते इति तु निश्चप्रचम् । तव वचनं श्रावं श्रावं तदनु न्यायनिर्णयं कर्तुं अत्र तव माता नास्ति । अहं

तावत् केषांचिदेव प्रश्नानां उत्तरं दातुमर्हामि । परं तानि सर्वाणि शिक्षितानि उत्तराणि । तत्सर्वमतिक्रम्य एकमेव वचनं यदहं वक्तुं शक्नोमीति चेत् श्रुणु– लौकिकनामरूपक्रियाभिः सह लोकेऽस्मिन् प्रविष्टौ द्वौ एव मानवौ नाम त्वं तथा राजकुमारी ।
राजकुमार्यै इदं सौभाग्यं यत् लब्धं तत्तु त्वत्तः एव, तुभ्यं च यल्लब्धं तत्तु त्वं तावत् मातुः सुतोऽसीति ।
यूवामेव आदिमौ तथा अन्तिमौ च
मातुः कोपो वा अनुग्रहः एव तव दैवमिति स्मृतिपथे भवतु ।
यश्च अवकाशोऽत्र लब्धः तं समीचीनतया उपयुज्य सम्यग्वचनरूपं अनुग्रहं कुरु इति पृच्छ । नो चेत् पश्चात्तापस्य पात्रमपि त्वमेव भवसि । किमपि त्वया प्रष्टव्यमस्ति चेत् मत्सकाशे, मातुरागमनात् पूर्वमेवास्थाने प्रष्टव्यं, माता यदा प्रत्यक्षा भवति, तदा तावत् स्वयमेव किञ्चिदपि न वक्तव्यम् ।

**संजीवशिवः** – (साक्रोशं) राजकुमारीं बलिमिति दातुं यूयं मत्तः तां यत् चोरितवन्तः स किं मन्तुः नास्ति ?

**गिरिमल्लिका** – समीचीनतया व्याहर्तुं अधीष्व, सतु बलिर्नास्ति सहजमृत्युरेव । दैवेनैव निर्णीते दिने, वासरे तथा घटिकायामेव नियतिनियममनुसृत्य स्वाभाविकं निधनमुपैतुं सा तावत् सज्जाभवन्ती वर्तते ।

**संजीवशिवः** – अहं यदा चिकित्सां करोमि तदा रोगिणा जीवितेन भवितव्यमेवेति मात्रा दत्तो वरस्तु मिथ्या भवति किल?

**गिरिमल्लिका** – रुग्णं दक्षिणेन वा वामेन माता यदा प्रत्यक्षा भवति

तत्पूर्वमेव त्वया या चिकित्सा कृता सा खलु अपराध एव । वरं ये ददति ये च गृह्णन्ति तेभ्योऽपि अधिकमेव दायित्वं वर्तते । ''पुत्रि, तव तावत् वैद्यः तव गले बद्धां भेषजलतां यदि न निष्कासयसि तदा संजीवशिवोऽपि मरिष्यति'' इत्यवोचाम । ''मम वैद्यः चिरं जीवतु'' इति सा स्वयमेव तां छित्वा क्षिप्तवती। तदनन्तरमेव वयं अलङ्करणार्थं प्रवृत्ताः जानासि किम् ?

**संजीवशिवः** – (हताशो भूत्वा) मम आशास्तावत् निर्गताशाः संवृत्ताः भ्रान्तिस्तावत् निरस्तभ्रान्तिर्जाता गिरिमल्लिके! क्रूरतरं दैवमिदं तु आवां एवंरीत्या कोणे प्रणुदितवत् एव । यदि जीवावः उभयोरपि एक एवोटजः यदि मरणं चेत् द्वयोरपि एकैव चिता इत्युक्तमासीत् । परं मामेव विश्वासेन अवलम्बिता राजकुमारी तु इदानीं एकैव म्रियमाणा अस्ति । मम सर्वापि चिकित्सा संप्रति मृत्योः स्पर्शेन निरर्थका जाता । विषं तु संप्रति शिवस्य कण्ठेनास्ति मम जीवनं परितः प्रसृतं विद्यते । मामपि बलिमिति गृहीत्वा विषादादस्मात् मुक्तिं कारय, मातः!

**गिरिमल्लिका** – पुत्र जेतुमशक्या या क्रीडा तां खेलन् वर्तसे । एवं भणित्वा अनन्तरं पश्चात्तापं कुर्यात्!

**संजीवशिवः** – इदानीमपि, पश्चात्तापं अनुभवन्नस्मि, दयाहीनां मातारं लब्धवानिति ।

**गिरिमल्लिका** – बालिश, राजकुमारीदर्शनात् प्रागेव तस्याः जननकाले एव तस्याः आयुष्यं निर्धारितमासीदिति नजानासि किम् ? नियतिनियमं परिवर्तयितुं शक्यते किम् ?

चरमसत्यं द्रष्टुम् वाञ्छितं किल,
तत्तु तव पुरतः एव प्रत्यक्षं दृश्यते पश्य!
प्रस्फुरन्ति असंख्यातानि ज्योतींषि तावत्
जीवानां राशिं सूचयन्ति ।
संप्रत्येव ज्वलितुं प्रवृत्तानि ज्योतींषि,
अङ्कुरयन्ति ज्योतींषि,
वर्धमानानि ज्योतींषि! प्रकाशमानानि ज्योतींषि!
निर्वापणदशायां वर्तमानानि, एकैकस्य तैलस्य
जीवस्यकृते एकैको दीपः, एकैकस्य तैलस्य प्रमाणं
अन्यस्मात् विभिन्नमेव । दीपशरावे यद्यद्प्रमाणं तैलं
विद्यते तत्तत्प्रमाणं आयुषः तस्य जीवस्य इत्यर्थः।
अत्र पश्यसि किम् ?
(सिंहासनस्य पुरतः ज्योतिद्वयं प्रदर्शयन्ती)
प्रकृष्टं प्रकाशमानं,
सर्वेषां ज्योतिषां बृहदाकारे वर्तमानं तथा तैलेन पूर्णं
यद् वर्तते तत्तु तव आयुषःज्योतिः। माता तावत्
सर्वापेक्षया अधिकं आयुः दत्तवती, सुतोऽसि इति।
अत्र पश्य, यत्र तैलं अवसितप्रायं, इतः किम् अचिरादेव
निर्वापितं भवतीव स्थितं, पार्श्वे एव कृशतरं ज्योतिरेकं
वर्तते खलु, तत्तु तव राजकुमार्याः। अहो इतः पश्य,
राजकुमारी अगता ।
(विवाहार्थं समलङ्कृतां राजकुमारीं करालमारिके
शुभगानं गायन्त्यौ, आनीय, कृशीभूतशिखया ज्वलतो
दीपस्य पुरतः स्थापयतः । राजकुमारी तावत् इतःपरं
जीवावसानस्य अवस्थायां वर्तते, संजीवशिवं तस्याः
पार्श्वे बृहद्ज्योतिषः समीपे स्थापयतः ।)

मङ्गलसूत्रबन्धनात् पूर्वं मातरं निमन्त्रयस्व, माता यदा सुप्रीता भवति तदा चिरंजीवत्वं प्रार्थयस्व, तदेव चातुर्यस्य लक्षणम् ।

**संजीवशिवः** – त्वं यथा प्रीतिं कृतवती तथैव पीडितवती तथा नान्योऽस्ति मातः, वात्सल्यं कृत्वा, विस्मृतवती यथा, तथा नान्योऽस्ति, सन्मानं कृत्वा अपमानं कुर्वन्तो न सन्ति । रक्षां कृत्वा हस्तं विमुच्य नोदितवन्त न सन्ति ।

अम्बे जगदम्बे,
सकलमपि चराचरं बिभीषयसि
तव सुतः नम इति वदति, मह्यं सहकारं देहि !
(शनैः, सिंहासने भयङ्कराकारवान् गृध्रः प्रत्यक्षो भवति। तस्य नेत्रे अधिकतरमेव भयजनके आसाते)

**पक्षी** – सर्वेषां प्रीत्यभ्युपगमस्य, प्रशंसायाः, राजकुमार्याः प्रीत्याः
तथा ममानुग्रहस्य च पात्रभूत, सुत, संजीवशिव, मङ्गलं ते भवतु ।
तव भक्त्या सुप्रीताहं ते सत्यस्य
अन्तिमदर्शनस्य अनुग्रहं कृतवती ।
यथाशक्ति गृहाण
अहं तव माता !
सर्वं गिलितं यथा तथा कुर्वती माता !
सर्वस्यापि निष्ठीवनं कुर्वती माता !
सर्वस्यापि अन्तःसमन्वयं कुर्वती माता
सर्वमपि बहिः प्रक्षिप्य प्रकाशयन्ती माताहम् ।
यद् यद् वर्तते तस्य सर्वस्यपि जीवितजालस्य सूत्रधारिणी,

चराचरस्य आद्यन्तरहितस्य अखण्डब्रह्माण्डस्य
माताहम्!
रूपादिमतां आकाराणां सृष्टिकर्त्रीअहम्,
आकाशं द्रावयित्वा, सर्वस्वमपि
शून्यतामानीय, सीमादिग्भ्रान्तकरणे
विचक्षणो गाढान्धकार एवाहम्
सर्वेषां प्रकाशानां, सर्वासां गतीनां चरमलक्ष्या!
सर्वस्वमपि जग्ध्वा, विविधकूपिकासु
क्वथमानप्राणान् विकृष्यापूर्य बहिर्यथा न पतति
तथा कर्त्री, सप्तसप्तसमुद्राणां पानकर्त्री,
पानं कृत्वा निष्ठीवनकर्त्री,
चतुर्दशभुवनानां शासनकर्त्री
शासनं कारयित्वा जीवनकर्त्री
कियद् कियद् वा विभक्तापि अभेद्याहम्,
अपरिहार्या प्रहेलिकाहं,
मामन्वेष्टुं आगतानां साधकानामुपरि वर्णान् विक्षिप्य
तेषां आत्मविस्मरणं कारयित्वा तिरोहिता
भवित्री इदं च मम व्यसनम् ।
बहुतरं चेत् तेषां नयनानां कृते
लघुतरताराणां सुषमान्वितमवगुण्ठनं दृष्टं स्यादेव ।
तावता एव ते दिग्भ्रान्ताः,
सत्यभूतं यद्‌कृतमस्ति, चरमसत्यमिति यत्किञ्चिदस्ति
चेत्, हे संजीवशिव, तत्तु अहमेव पुत्र, नान्यदस्ति,
मां च कियद्भिरपि वा नामधेयैः आकर येत्
शिवलिङ्गस्य नामधेयेनापि वा, प्रकाशस्य सीमाः
सन्ति, परं अन्धकारस्य न!

**संजीवशिवः** – इतोऽप्यधिकतरं वक्तुं नार्हसि मातः । यतःमृत्योः देवता असि इति सर्वं सहजमेव ते । तर्क इति चेत् तर्केण, यद्यपेक्ष्यते चेत् प्रत्यक्षमेव प्रमाणमिति कृत्वा तव सत्यं दर्शयितुमर्हामि।

परं शिवलिङ्गस्य सत्यं तावत् सर्वप्रमाणानि अतीत्य वर्तते ।

**पक्षी** – प्रमाणैः मामपि ग्रहीतुं शक्यमभवत् वत्स!

**संजीवशिवः** – स्वीयैःनियतिनियमैः स्वयमेव हस्तपादौ बद्धवती त्वं कथं अन्तिमसत्यं भवितुमर्हसि मातः?

**पक्षी** – मम नियतिं उल्लङ्घ्य तुभ्यं अमरत्वं दातुमहं समर्था यदि त्वयि तस्य विनियोगं कर्तुं विवेकः अस्ति चेत्।

**संजीवशिवः** – मृत्युभयापेक्षया, तद्रहितात् जीवितात्
मम अधिकतरं भयमस्ति
अमरो भूत्वा त्वत्तः दूरतरभवनापेक्षया
तव सुतो भूत्वा मनुष्य इति भवनमेव मे सौभाग्य-कारकमस्ति मातः!

**पक्षी** – (उत्थाय) वत्स तव वचनेन सुप्रीतास्मि संवृत्ता । विवाहस्य उपायनमिति ते द्विगुणितमायुष्यं दत्तवती, मङ्गलसूत्रं बधान ।

(राजकुमार्याः गले मङ्गलसूत्रं बध्नाति, राजकुमारी तावत्, निःसत्त्वमेव पतिता ।

**संजीवशिवः** – द्विगुणितं आयुष्यं दत्तमिति
ते अनन्तसंख्याकाः कृतज्ञाताः, मातः ।
परं एकं वचनं वद मे, मह्यं यद्दत्तं आयुष्यं
तदपि वा यथेष्टं उपयोक्तुं मे
स्वातन्त्र्यमस्ति वा, मातः

पक्षी – सत्यमस्ति यदि आत्महननार्थं
न उपयुज्यते चेत्

संजीवशिव – स्वीयं आयुष्यदीपं उद्धृत्य तत्रस्थं
तैलं पार्श्वस्थिते राजकुमार्याः दीपशरावे
पातयन्)
तथा चेत् अत्र पश्य, मम शेषायुष्यस्य
अर्धं राजकुमार्यै दीयमानमस्ति ।
सा तु इदानीं जीवतु नाम ।
(सहसा स पक्षी कोपेन तथा व्यथया, भयङ्करमेव आक्रोशयति यदा च अनूनकमधोलोकं कम्पते । राजकुमार्याः आयुष्यज्योतिः क्रमेण तेजोमयो भूत्वा ज्वलदस्ति । राजकुमारी, शनैः उत्थाय भयभीता स्वं परितः पश्यन्ती स्थिता यदा, असहायको भूत्वा पक्षी अधःपतनमिव सिंसासने एव निःसत्त्वं परिपतति। राजकुमारी भयेन संजीवशिवं परिष्वजति । तत्रस्थो भयानकः प्रकाशः प्रज्वलतरो भवन् अखण्डो मृत्युलोक एव ज्वलन्निव अनुभवो भवति । असहायकस्य पक्षिणः आर्तनादात् सूचनां लभमाना गिरिमल्लिका सत्त्वहीनेन ध्वनिना उद्घोषयति ।

गिरिमल्लिका – द्वावप्येतौ अस्मिन्नेवक्षणे अस्माल्लोकात् अपसरताम्। स्वीयलोके कस्यापि पुरतः अत्र यद् घटितं तत् नैव कथयेत् । यदि कथ्यते चेत् प्रथमवाक्यस्य समाप्तेः पूर्वमेव, जिह्वा छिन्ना भूत्वा मरिष्यतीति–ज्ञायताम् । एतस्य वैद्यवृत्तेः कृते मात्रा दत्तो वरः अद्यप्रभृति परिणामरहित इति संकेतम्

–मङ्गलम्–



SRI JAGADGURU VISHWA
ARADHYA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ....3384.......

## OTHER BOOKS BY DR. VENEEMADHAVA-SHASTRI

1. Vidyaaranya's Contribution to Advita
   Ph.D. Thesis, Parimal Publication, New Delhi
2. Drishti Srishtivaada - A study
   Second Ph.D. Thesis, Parimal Publication, New Delhi
3. Political elements in the Garuda Puraana
   P.G. Dept. of Sanskrit, Karnatak University, Dharwad
4. Political Ideals in the Shaanti Parva
   P.G. Dept. of Sanskrit, Karnatak University, Dharwad
5. Ancient Hindu Law and Administration in the Shatapatha Braahmana
   P.G. Dept. of Sanskrit, Karnatak University, Dharwad
6. Sanskrita Vyaakarana Surabhi
   Mahatee Publication, Dharwad
7. Sookti Sudhaanidhi
   Mahatee Publication, Dharwad
8. Shaareeraka Meemaamsaa (Chatussootri)
   Brahmavidyaa Prakaashana
9. Ghatakarpara Kaavyam
   Mahatee Publication, Dharwad
10. Kathaachaarulataa
    Mahatee Publication, Dharwad
11. Sanskrita KaavyaSushamaa
12. Crouncha Paksshinah - Translated work in Sanskrit
    Published by Saahitya Akademi, New Delhi
13. Raajeemati - Translated work in Kannada and English
14. Sanskrita Kaavya Manjari
15. Gangaa Stotragalu - Ondu Adhyayana
16. Gaathaa-Saptashatee Sangraha
17. Lakshmi Nrisimha Stotra - Ondu Adhyayana
18. Anyokti Muktakaavali (Shatakadwaya)
    Brahma Vidyaa Prakaashana, Dharwad
19. Baala Sanskrita Saarikaa
    Brahma Vidyaa Prakaashana, Dharwad
20. Kavitaanjali
    Brahma Vidyaa Prakaashana, Dharwad
21. Soudaamini
    Brahma Vidyaa Prakaashana, Dharwad

Besides Editor of 7 books & author of more than 22 books.

## डा. चन्द्रशेखर कम्बारमहोदयाः

हम्पी कन्नडविश्वविद्यालयस्य भूतपूर्वकुलपतयः डा. चन्द्रशेखर कम्बारमहोदयाः ज्ञानपीठपुरस्कारेण समलंकृताः संप्रति केन्द्रीय साहित्य अकादमी संस्थायाः अध्यक्षाः सन्ति । प्राग्रहरनाटककाराणां कवितल्लुजानां तेषां कन्नडकृतयः अनितरसाधारण रमणीयांशैः लोकविख्याताः विद्यन्ते इति तु विवादविहीनो विषयः। इयानंशः तेषां परिचयाय अलमिति मन्ये

## अनुवादकाः
## डा. वेणीमाधवशास्त्रि-महोदयाः

''महामायीति'' कन्नड नाटकस्य अनुवादकाः डा. वेणीमाधवशास्त्रि-महोदयाः वेदान्क्षे त्रे पीएच्.डी. पदवीद्वयं संपाद्यापि साहित्यसरस्वत्याः नित्योपासकाः सन्ति । कन्नड-संस्कृत-आंग्ल हिन्दी भाषासु दशोनद्विशताः (190) शोधप्रबन्धाः द्विपञ्चाशत् (52) पुस्तकानि, कथाः, एकाङ्कनाटकानि, बालगीतानि, अन्योक्तिमुक्तकानि विविधविषयमुक्तकसाहस्रीं च लिखितवन्तः शास्त्रिणः. शास्त्रविद्यानिधिः-विद्यावाचस्पति-वेदान्तचार्य-काव्यरत्न-विद्वद्भूषण-पुरुषोत्तम-आद्यशङ्करपुरस्कारादि-गणेय-पुरस्कारादिभिरभिनन्दनीयाः सन्ति ।

**Roopa Publications**

ISBN : 978-93-83314-16-04

Price : ₹ 100/-